दूषणम्, नानुकूलत्वात्। तथा च प्रतिकूलस्यादोषस्य प्रतिषेधस्य तद्रागेऽपि समानमित्यदूषणमेतदित्यन्यदूह्यम्।

अथ सर्वगुणोच्छेदाद् वरं वैषयिकं सुखं दुःखसाधनपरिहारेण भोक्तव्यमिति मन्यसे, तन्न, तस्य दुःखानुषङ्गेण दुःखरूपतया हेयत्वात्। येषाञ्चैतदुपादेयं न तान् प्रति इदमर्थवच्छास्त्रम्। सन्ति च वैषयिकसुखद्वेषिणः पुरुषास्तान् प्रतीदं शास्त्रम्। ते च यद्युपदेशमपेक्षन्ते नोपायान्तरादेवार्थं प्रतिपद्यानुष्ठाने प्रवर्तन्त इति। मोक्षास्तित्वे च प्रमाणोपपत्तेः। शेषं वचनमात्रमित्युपेक्ष्यते।

अन्ये तु अन्यथाभूतादेव साधनाद् अन्यथाभूतं मोक्षं मन्यन्ते। यथोक्तम्, गुणपुरुषान्तरविवेकदर्शनं निःश्रेयससाधनमिति। तथाहि, पुरुषार्थेन हेतुना प्रधानं प्रवर्तते। पुरुषार्थश्च द्वेधा शब्दाद्युपलब्धिर्गुणपुरुषान्तरविवेकदर्शनञ्च। सम्पन्ने हि पुरुषार्थे चरितार्थत्वान्न प्रधानं शरीरादिभावेन परिणमत इति द्रष्टुः स्वरूपेणावस्थानं भवतीति। विज्ञातं वा द्रष्टृतया कुट्टिनीस्त्रीवद् भोगसम्पादनाय पुरुषं नोपसर्पतीति।

तदेतत् सर्वमसत्। प्रधानासत्त्वस्य वक्ष्यमाणत्वात्। स्थिते हि प्रधानसद्भावे पुरुषस्य तद्विवेकदर्शनमुपपद्यते। उपेत्य वा ब्रूमः। यदि प्रधानं पुरुषस्थं निमित्तमनपेक्ष्य प्रवर्तते मुक्तात्मन्यपि शरीरादिसम्पादनाय प्रवर्तेत, अविशेषात्। अथादर्शनापेक्षमिति चेत्, यस्य हि गुणपुरुषान्तरविवेकदर्शनानुपपत्तिस्तं प्रति प्रधानं प्रवर्तते, न चासौ मुक्तात्मनीति, तन्न। मुक्तात्मन्यपि विवेकदर्शनस्य विनाशेन प्रवृत्तिप्रसङ्गात्। न चानुत्पत्तिविनाशयोरदर्शनत्वेन विशेषं पश्यामः। अथादृष्टापेक्षं प्रवर्तत इति चेत्, तदसत्। तस्यापि प्रधाने शक्तिरूपतया व्यवस्थितस्य उभयत्राविशेषात्। तथा शरीरादिवैचित्र्याभावश्च तस्यैकरूपत्वात्। न च परिणामवैचित्र्याच्छरीरादिवैचित्र्यम्। तद्वैचित्र्ये कारणाभावात्। कथञ्च साम्येनावस्थितं तत्प्रधानं वैषम्यमवाप्नुयात्, पुरुषार्थस्य प्रवृत्तिहेतोरभावात्? सद्भावे वा पुरुषार्थस्य तदर्था प्रवृत्तिर्न भवेद् विद्यमानत्वादेव। न च प्रवृत्तिहेतुं विना कर्म [णि] प्रवर्तमानस्योपरमो युक्तो हेत्वभावात्।

यच्चेदं द्रष्टुः स्वरूपेणावस्थानमित्युक्तं तदिष्यत एव, विशेषगुणरहितस्यावस्थानाभ्युपगमात्।

अथ चिद्रूपस्यावस्थानम्, तन्नास्ति, अनित्यत्वेन चिद्रूपताया विनाशात्। न चाक्षाद्यन्वयव्यतिरेकानुविधायिनश्चैतन्यस्य नित्यत्वे प्रमाणमस्ति। आत्मरूपतेति चेत्, तस्याश्च आत्मतादात्म्ये पर्यायमात्रम्। व्यतिरेके तु संयोगादिभिरनैकान्त्यम्। गुणगुणिनोश्च तादात्म्यप्रतिषेधं वक्ष्यामः।

यच्चेदं द्रष्टृतया विज्ञातन्तु पुरुषं नोपसर्पतीति। असदेतत्, अचेतनत्वात्। तथाहि, अचेतनतया प्रधानस्य अहमनेन द्रष्टृतया विज्ञातमिति विज्ञानाभावे पूर्ववत्प्रवृतिरविशिष्टेत्यलमतिप्रसङ्गेन।

अन्ये तु अस्थिरादिभावनावशाद् रागादिवियुक्तज्ञानोत्पत्तिर्निःश्रेयसमिति मन्यन्ते। तथाहि, सर्वं क्षणिकमिति भावयतो विषयेष्वासक्तिर्व्यावर्तते ममेदमिति सम्बन्धाभावात्। तथा सर्वं निरात्मकमिति भावनायां नाहं परः, न ममायमिति परिग्रहद्वेषाभावे भवत्येव विशुद्धचित्तसन्तानोत्पत्तिरिति। तथा च घटाद्यर्थस्य प्रतिषेधात् सर्वं शून्यमिति च। एवं हि दुःखसमुदयनिरोधमार्गेषु विशिष्टज्ञानं निःश्रेयसकारणमिति। तथाहि, दुःखं रूपादिस्कन्धपञ्चकम्, तस्य समुदयः कारणं समुदेत्यस्मादिति, तयोर्निरोधो विनाशस्तस्योपायो मार्ग इत्येषु विशिष्टज्ञानवशाच्छुद्धचित्तसन्तानस्तदुच्छेदो वा निःश्रेयसमिति युक्तम्।

नैतदेवम्। क्षणिकादिभावनाया मिथ्यारूपत्वात्। न च मिथ्याज्ञानस्य निःश्रेयसकारणत्वमतिप्रसङ्गात्। यथा च न क्षणिकत्वम्, शून्यत्वम्, नैरात्म्यं वा तथा वक्ष्यामः। अथासक्तिप्रतिषेधार्थमेवं भावनीयम्, तन्न। अन्यथापि भावात्। तथाहि, पदार्थतत्त्वज्ञानं प्रवृत्तेः कारणम्, दोषदर्शनञ्च निवृत्तेरिति दृष्टम्। यथा मधुविषसंपृक्तेऽन्ने दोषादर्शनाद् गुणबुद्धितः प्रवर्तते दोषदर्शनाच्च निवर्तते, नार्थप्रतिषेधात्। एवं पुत्रादावपि आत्मीयवैरूप्यदर्शनमेव निवृत्तिकारणमिति वाच्यम्। न सम्बन्धाभावः। तत्प्रतिषेधो भाव्यः। उक्तञ्च न्यायभाष्यकृता 'रूपादिषु निमित्तसंज्ञा भावनीया नानुव्यञ्जनसंज्ञेति इत्थं दन्ता इत्थं केशाः' (४।२।३) इत्यादि। या चेयं दुःखसमुदयनिरोधमार्गेषु भावना सा यदि दुःखं तत्कारणं तयोर्निरोधस्तदुपायश्चेति इष्टं न प्रतिषिध्यते। तथा हि दुःखं स्वरूपत एव, अन्यद् दुःखकारणत्वात्। तच्च रूपं संज्ञा वेदना संस्कारो विज्ञानमिति रूपादिस्कन्धपञ्चकमन्यद् वा भवतु। सुखमपि दुःखं दुःखानुषङ्गादिति सर्वं दुःखं तस्य विच्छेदोपायस्तत्त्वज्ञानमिष्यत एव।

यच्चेदं रागादिवियुक्तज्ञानं विशिष्टभावनात इति, तन्नास्ति। क्षणिकत्वे कार्यकारणभावप्रतिषेधस्य वक्ष्यमाणत्वात्। उपेत्यवादेन तूच्यते, न रागादिमतो विज्ञानात् तद्रहितस्योत्पत्तिर्युक्तेति। तथाहि[?] यथा हि 'बोधाद् बोधरूपता' ज्ञानान्तरे, तद्वद् रागादिरपि स्यात् तत्तादात्म्यात्। विपर्यये वा तदभावप्रसङ्गादिति। न च विलक्षणादपि कारणाद् विलक्षणकार्यस्योत्पत्तिदर्शनाद् बोधाद् बोधरूपतेति प्रमाणमस्ति। अत एवास्य ज्ञानस्य ज्ञानान्तरहेतुत्वेन पूर्वकालभावित्वं समानजातीयत्वमेकसन्तानत्वं वा न हेतुर्व्यभिचारात्। तथाहि, पूर्वकालभावित्वं तत्समानक्षणैः, समानजातीयत्वञ्च सन्तानान्तरज्ञानैर्व्यभिचारीति। तेषां हि पूर्वकालभावित्वेन समानजातीयत्वेऽपि न विवक्षितज्ञानहेतुत्वमिति। एकसन्तानत्वञ्च अन्त्यताज्ञानेन व्यभिचारीति। अथ नेष्यत एवान्त्यं ज्ञानं सर्वदा आरम्भात्। तथाहि, मरणशरीरज्ञानमपि ज्ञानान्तरहेतुर्जाग्रदवस्थाज्ञानञ्च सुषुप्त्यवस्थाज्ञानस्यापीति। नन्वेवं मरणशरीरज्ञानस्यान्तराभवशरीरज्ञानहेतुत्वे गर्भशरीरज्ञानहेतुत्वे वा सन्तानान्तरे विज्ञानजनकत्वप्रसङ्गो नियमहेतोरभावात्। अथ इष्यत एव उपाध्यायज्ञानं शिष्यज्ञानस्यान्यस्य कस्मान्न भवतीति? अथ कर्मवासना नियामिकेति चेत्, न। तस्यापि ज्ञानव्यतिरेकेणासम्भवात्। तथाहि, तत्तादात्म्ये सति विज्ञानं बोधरूपतया विशिष्टं बोधाच्च बोधरूपतेत्यविशेषेण विज्ञानं विदध्यादित्यलम्।

यच्चेदं सुषुप्त्यवस्थाज्ञानस्य जाग्रदवस्थाज्ञाने कारणत्वमिति, असदेतत्। सुषुप्त्यवस्थायां ज्ञानसद्भावे जाग्रदवस्थातो न विशेषः स्याद् उभयत्रापि स्वसंवेद्यज्ञानस्य सद्भावाविशेषात्। यद्वा निद्रयानभिभूतत्वं विशेष इति चेत्, असदेतत्। तद्धर्मतया तस्यापि तादात्म्येनाभिभावकत्वासम्भवात्। व्यतिरेके तु रूपादिपदार्थानामेव सत्त्वात् तत्स्वरूपं निरूप्यम्। अभिभवश्च यदि विनाशः, न विज्ञानस्य सत्त्वं विनाशस्य वा निर्हेतुकत्वम्। अथ तिरोभावः, न विज्ञानस्य सत्त्वेन तत्सत्तैव संवेदनमित्यभ्युपगमे तस्यानुपपत्तेः। अथ सुषुप्त्यवस्थायां विज्ञानासत्त्वेनान्त्यज्ञानसद्भावादेकसन्तानत्वं व्यभिचारीति।

यच्चेदं विशिष्टभावनावशाद् रागादिविनाश इति, असदेतत्। निर्हेतुकत्वाद् विनाशस्याभ्यासानुपपत्तेश्च। अभ्यासो ह्यवस्थितस्यार्थस्यातिशयाधायकत्वादुपपद्यते, न क्षणिकज्ञानमात्र इति। अत एव योगिनि सकलकल्पनाविकलं विज्ञानमुत्पद्यते। न च

सन्तानापेक्षयातिशयस्तस्यैवासम्भवात्, अविशिष्टाद् विशिष्टोत्पत्तेरयोगाच्च। तथाहि, पूर्वस्मादविशिष्टाद् उत्तरोत्तरं सातिशयं कथमुपजायत इति चिन्त्यम्।

यच्च सन्तानोच्छित्तिर्निःश्रेयसमिति, तन्न। निर्हेतुकतया विनाशस्योपायवैयर्थ्यमयत्नसाध्यत्वात्।

अन्ये तु अनेकान्तभावनातो विशिष्टप्रदेशेऽक्षयशरीरादिलाभो निःश्रेयसमिति मन्यन्ते। तथा च नित्यभावनायां ग्रहानित्यत्वे च द्वेष इत्युभयपरिहारार्थमनेकान्तभावनेति। एवं सदसदादिष्वपि योज्यम्। प्रत्यक्षश्च स्वदेशकालकारणाधारतया सत्त्वं परदेशादिष्वसत्त्वमित्युभयरूपता। तथा घटादिर्मृदादिरूपतया नित्यः सर्वावस्थासूपलम्भात्। घटादिरूपतया चानित्यस्तदपायात्। एवमात्माप्यात्मरूपतया नित्यः सर्वदा सद्भावात्। सुखदुःखादिपर्य्यायरूपतया चानित्यस्तद्विनाशात्। एवं सर्वत्र स्वकार्येषु कर्तृत्वं कार्यान्तरेषु चाकर्तृत्वमित्यूह्यम्। अथ स्वशब्दाभिधेयत्वं शब्दान्तरानभिधेयत्वञ्चेति।

तदेतदसाम्प्रतम्, मिथ्याज्ञानस्य निःश्रेयसकारणत्वेन प्रतिषेधात्। अनेकान्तज्ञानञ्च मिथ्यैव, बाधकोपपत्तेः। तथाहि, नित्यानित्ययोर्विधिप्रतिषेधरूपत्वाद् अभिन्ने धर्मिण्यभावः। एवं सदसत्त्वादेरपीति। यच्चेदं घटादिर्मृदादिरूपतया नित्य इति, असदेतत्। मृद्रूपतायास्ततोऽर्थान्तरत्वात्। तथाहि, घटादर्थान्तरं मृद्रूपता। मृत्त्वं सामान्यं तस्य तु नित्यत्वेन घटस्यातथाभावस्ततोऽन्यत्वात्। घटस्य तु कारणाद् विलयोपलब्धेरनित्यत्वमेव। यच्चेदं स्वदेशादिषु सत्त्वं परदेशादिष्वसत्त्वमिष्यत एवेतरेतराभावस्याभ्युपगमात्। तथाहि, इतरस्मिन् देशादावितरस्य घटस्याभावो नानुत्पत्तिर्न प्रध्वंसस्तत्र तस्य सर्वदा सत्त्वात्। द्वैरूप्ये तु स्वदेशादिष्वनुपलम्भप्रसङ्गः। एवमात्मनोऽपि नित्यत्वमेव। सुखदुःखादेस्तद्गुणत्वेन ततोऽर्थान्तरस्य विनाशेऽप्यविनाशात्। कार्यान्तरेषु चाकर्तृत्वं न प्रतिषिध्यते। तथाहि, यद् यस्यान्वयव्यतिरेकाभ्यामुत्पत्तौ व्याप्रियत इत्युपलब्धं तत् तस्य कारणं नान्यस्येत्यभ्युपगम्यते। एवं शब्दान्तरानभिधेयत्वेऽपि न सर्वं सर्वशब्दाभिधेयमित्यभ्युपगमात्।

न चानेकान्तभावनातो विशिष्टशरीरादिलाभेऽस्ति प्रतिबन्धः। न चोत्पत्तिधर्मणां शरीरादीनामक्षयत्वं न्याय्यम्। तथा मुक्तावप्यनेकान्तो न व्यावर्तत इति मुक्तो न मुक्तश्चेति स्यात्। एवञ्च सति स एव मुक्तः संसारी चेति प्रसक्तम्। एवमनेकान्तेऽप्य-

नेकान्ताभ्युपगमे दूषणम् । वस्तुनो हि सदसद्रूपताऽनैकान्तिकः । तस्याप्यनैकान्तिकाभ्युपगमे रूपान्तरमपि प्रत्यक्षम्, एवं नित्यानित्यरूपताव्यतिरिक्तञ्च रूपान्तरमित्यादि वाच्यम् ।

अन्ये तु आत्मैकत्वज्ञानात् परमात्मनि लयः सम्पद्यत इति ब्रुवते । तथाहि, आत्मैव परमार्थः सन्, ततोऽन्येषां भेदे प्रमाणाभावात् । प्रत्यक्षं हि पदार्थानां सद्भावग्राहकमेव न भेदस्येत्यविद्यासमारोपित एवायं भेद इति मन्यन्ते ।

तदप्यसत् । आत्मैकत्वज्ञानस्य मिथ्यारूपतया निःश्रेयससाधनत्वानुपपत्तेः । मिथ्यात्वञ्च आत्माधिकारे वक्ष्यामः, व्यवस्थातो नानात्मानः ( वै० सू० ३ । २ । २० ) इति सूत्रेण ।

एवं शब्दाद्वैतविज्ञानमपि मिथ्यारूपतया न निःश्रेयससाधनमिति द्रष्टव्यम् । तथाहि, सर्वार्थानां शब्दरूपतेति प्रमाणाभावः । अथ भेदेऽपि प्रमाणाभाव इति चेत्, तदसत् । चक्षुरादिना शब्दरूपतावियुक्तानामर्थानां प्रतिभासनात् । शब्दरूपता हि श्रावणत्वमर्थस्य सतः । न चार्थेष्वेतदस्ति श्रोत्रेणाग्रहणात् । अथ शब्दस्यैवावस्थाभेदाद् ग्रहणवैचित्र्यमिति चेत्, तन्न । शब्दरूपतायामेव तत्स्यात् , तत्र च प्रमाणाभाव एव । अथ शब्दसम्पर्केण प्रतिभास एव प्रमाणमिति चेत्, न । अकृतसमयस्य वाय्वादेस्तदन्तरेणापि प्रतिभासनात् । न च शब्दान्तरेण सम्पर्को युक्तः समयवैयर्थ्यप्रसङ्गादिति । शब्दरूपतायां साध्यायां न शब्दसम्पृक्तप्रतिभासः प्रमाणम् । अत एव वैखरी मध्यमा पश्यन्ती सूक्ष्मा चेति भेदप्रतिपादनमुन्मत्तभाषितम् । न च शब्दाद्वैतज्ञानात् सूक्ष्मावस्था सम्पद्यत इत्यस्ति प्रतिबन्धः ।

एकस्मिंश्चाद्वैते प्रतिषिद्धे प्रतिबन्धसमानतया सर्व एवाद्वैतभेदाः प्रतिषिद्धा भवन्तीत्यात्मैकत्वप्रतिषेधादेवेदं प्रतिषिद्धं भविष्यतीत्युपरम्यते ।

अन्ये तु महेश्वरप्रसादादशुद्धैश्वर्यविनाशे तद्गुणसंक्रान्तिं मन्यन्ते । तच्चासत् । अन्यगुणानामन्यत्र वृत्तेरदर्शनात् । महेश्वरप्रसादश्च मुक्तौ न प्रतिषिध्यते तस्यास्तदधीनत्वादिति स्थितमसद्वादप्रतिषेधात् । षट्पदार्थसाधर्म्यवैधर्म्यतत्त्वज्ञानं मुक्तस्य निःश्रेयसकारणमिति ।

## सूत्रस्थ-अथेत्यादिशब्दविचारः

अथेत्यादिवाक्यस्य [ ? ] सूत्रेणापि सम्बन्धो व्याख्यानान्तरमिति मन्यन्ते, तच्चासत्। सर्वस्मिन् व्याख्याने सूत्रितत्वोपदर्शनं भाष्यस्येत्यत एव। अथातो धर्मं व्याख्यास्यामः (वै. सू. १।१।१), यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः (वै. सू. १।१।२) इति। [पूर्वं] सूत्रे अथशब्दोऽप्यानन्तर्ये वर्तत इत्यन्यस्यासम्भवान्नमस्कारानन्तरमिति लभ्यते। स च ज्ञानप्रस्तावाद् ईश्वरस्यैवेति। भाष्यकारश्च सूत्रकाराभिमतं परस्य गुरोर्नमस्कारमनूद्यापरस्य नमस्कारं करोतीति व्याख्येयं न तु कणाद एव, स्वात्मनि क्रियाविरोधात्।

नापि कणान् अत्तीति कणाद इति कणशब्देन स्वकर्मफलस्याभिधानात् कष्टव्युत्पत्त्या संसार्यात्मनः। तन्नमस्कारे प्रयोजनाभावात्।

अथशब्दार्थः 'अनु' शब्देनोक्त एव। 'अतः' शब्दोऽपि वचनवृत्त्या धर्मं व्याख्यास्याम इति, विविधमनेकप्रकारेण यदुत्पद्यते यतश्च नोत्पद्यत इत्या [इति] प्रतिबोधं यावत् तावत् प्रतिपादयिष्याम इति धर्मव्याख्यानार्थमेव षट्पदार्थोपवर्णनम्। अत एव पदार्थो धर्मः संगृह्यत इति पदार्थधर्मसङ्ग्रह इत्युक्तम्। उत्तरसूत्रस्य तु विवरणं महोदयः, महानुदयः स्वर्गापवर्गलक्षणोऽस्माद् भवतीति महोदय इत्युक्तम्। धर्मात् सुखं ज्ञानञ्चेति, ज्ञानोत्पत्तौ तस्यैव प्राधान्यात् तदुपसर्जनतया शेषं व्याख्यायत इति।

अथावयवार्थः।

* प्रणम्य हेतुमीश्वरम् * इति। प्रेत्युपसर्गेण प्रणामातिशयं दर्शयति। हेतुत्वं निमित्तकारणत्वम्। तच्चान्येषामप्यस्तीति ईश्वरपदम्। ईश्वरशब्दश्चान्यत्र वर्तमानोऽपि ज्ञानप्रस्तावान्महेश्वर एव वर्तते। शङ्कराज् ज्ञानमन्विच्छेत्० इति वचनात्।

ननु व्यर्थं तर्हि हेतुपदम्, ज्ञानप्रस्तावाद् विशेषणसिद्धेः, नैतदेवम्। स्तुतेर्गुणसंकीर्त्तनरूपतया सकलकार्यकर्तृत्वाभिधानात्। अन्यथा ह्यन्यतराभिधानेनैव गतार्थत्वाद् व्यर्थं स्यादुभयाभिधानम्।

तदेवमीश्वरप्रणामानन्तरं मुनिं प्रणमति। मुनयश्चान्येऽपि विशिष्टज्ञानवैराग्यवन्तो भवन्तीति विशेषणम् *कणाद* इति। विशिष्टज्ञानसम्बन्धित्वञ्च तदभिहितपदार्थानां प्रमाणान्तरेणासाधनाद् विज्ञायते। अत एव तत्त्वज्ञानसद्भावे मिथ्याज्ञानस्य रागद्वेषहेतोरभावाद् द्वेषवैराग्यं निश्चीयते।

कणानत्तीति कणादस्तमिति विशिष्टाहारनिमित्तसंज्ञोपदर्शनेनासच्चोद्यनिरासः। तच्च

कणान् वा भक्षयेत् कामं माहिषाणि दधीनि च। इत्यादि युक्तियुक्तम् ।

युक्तिबोधश्च न प्रवृत्तेः कारणं प्रवृत्तौ सत्यां तद्भावात्। तथाहि, श्रवणे प्रवर्त्तमानो विजानाति युक्तमयुक्तं वेति। न तदवबोधे प्रवृत्तिरितरेतराश्रयत्वप्रसङ्गात्। अतो विशिष्टपुरुषप्रणीतत्वोपबोधे सत्यादौ श्रवणे प्रवृत्तिर्युक्ता। तथाहि, मनुना प्रणीतं व्यासेन प्रणीतमिति मत्वा प्रवर्तन्ते जनाः।

तदेवं परापरगुरुनमस्कारापेक्षधर्मविशेषेऽधर्मप्रतिबन्धात् तत्तत्कार्याणामभावे भवत्येवाविघ्नतः शास्त्रपरिसमाप्तिरिति। ननु चायुक्तमेतत्। सत्यपि नमस्कारे शास्त्रपरिसमाप्तेरदर्शनात् कादम्बर्यादौ। असत्यपि दर्शनात् प्रमाणतोऽर्थप्रतिपत्तौ (न्या. भा. १।१।१) इत्येवमादौ।

सत्यम्। शास्त्रपरिसमाप्तेः कार्यत्वादवश्यं कारणं वाच्यमित्यन्यस्यासम्भवाद् धर्मविशेषः कारणमिति। स च नमस्कारादन्यस्माद् वा भवतु, न नियम्यत इत्येके। अन्ये तु साधनविशेषाद् विशिष्यत इति नमस्कारादेवोपजायते धर्मविशेषः कारणमिति।

अथ नमस्काराभावे तर्हि कथं शास्त्रपरिसमाप्तिरिति? न, तत्रापि कार्यसद्भावेन कारणसद्भावसिद्धेः। वाचिकनमस्काराभावेऽपि मानसो नमस्कारो ज्ञायत इति। एकदा हि विशिष्टनमस्कारसद्भावे परिसमाप्तेरुपलम्भादिति। तथाहि, मानसनमस्कारोपचितो वाचिको नमस्कारः परिसमाप्तेः कारणमिष्यते, मानसस्तु केवलोऽपीति। अत एव क्वचिद् वाचिकसद्भावेऽपि मानसनमस्काराभावादपरिसमाप्तिर्युक्तेति। तस्य चाभावः कार्यानुत्पादेनैव ज्ञायत इति। नमस्काराच्च धर्मः सम्पद्यत इत्यागमाद् व्याप्तिग्रहणम्। तथा लौकिकोऽपि पुरुषः कृतनमस्क्रियः क्रियाकरणे प्रवर्तमानो दृष्टः, किं पुनर्भगवान् मुनिरनवद्यवादी।

अन्ये तु असच्चोद्यनिरासार्थं कणान् ददातीति, दयत इति वा व्युत्पत्त्यन्तरमाश्रयन्ते। अत्र किल वैशेषिकसूत्ररचनाकरण इत्युच्यत इति चिन्त्यमेतत्। प्रसिद्ध्यपरिज्ञानपरिहारार्थं चोपात्तमित्यलम् असद्व्याख्यानैरिति।

तदेवं परापरगुरुनमस्काराद् यतोऽन्तरायप्रध्वंसो यतो वा अन्तेवासी यथोक्तलक्षणसम्पन्नः, अतोऽनन्तरमेव प्रतिपक्षक्रियानन्तरितः पदार्थधर्मसंग्रहः प्रवक्ष्यत इति।

न च क्त्वाप्रत्ययादेव विशिष्टानन्तर्यप्रतिपत्तिः। तस्य हि समानकर्तृकत्वे सति पूर्वकाल-भावित्वमात्रे भावात्। तथाहि, भोजनानन्तरं शयनादिक्रियाव्यवधानेऽपि भुक्त्वा व्रजतीति प्रयोगो भवत्येव। अत्र चेश्वरप्रणामानन्तरमेव मुनेर्नमस्कारस्तदनन्तरमेव प्रवचन-क्रियेति। न च अप्रतिपक्षक्रियाव्युदासोऽवयवचलनादेर्भावादिति।

* पदार्थधर्मसंग्रहः * इति। पदार्थानां धर्मास्तेषां संग्रह इत्युत्तरपदप्राधान्येऽपि धर्माणां धर्मिनिष्ठतया संग्रहो भवत्येव। धर्मिणां संग्रह इति सुखदुःखसाधनत्वधर्मात्रबोधे सति प्रवृत्तिनिवृत्त्योर्भावाद् धर्माणामिह प्राधान्यं न निषिध्यते। तत्त्वज्ञानञ्चात्र प्रधानतया विवक्षितम्, तद् धर्मिषूपसर्जनतयापि लभ्यत एव।

यद्वा तत्त्वज्ञानप्रधानक्रियासम्बन्धाद् उभयेषां प्राधान्यमिति पदार्थाश्च धर्माश्चेति समासः। स्वातन्त्र्यं हि प्रधानक्रियासम्बन्ध एव। न धर्मितादात्म्यं धर्माणामिति वक्ष्यामः। पदार्थधर्माणां संग्रह इति निबन्धान्तरैर्विस्तरोक्तानां संक्षेपेणाभिधानम्। भावव्युत्पत्त्या तत्त्वज्ञानमित्यपरे।

स च *प्रवक्ष्यते* कथयिष्यते। किंविशिष्टः? महानुदयस्तत्कार्यश्च निःश्रेयसमस्माद् भवतीति * महोदयः * इति।

**द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः।**

'पदार्थधर्मसङ्ग्रह' इत्यादिसामान्योक्तेर्विभजनाय द्रव्यादिवाक्यम्। तच्च विशेषोपदर्शनाच्छेषप्रतिषेधपरम्, भवत्येव विभागाच्चेयत्तावधारणमिति षण्णामेवा-भिधानात् षडेव पदार्था इति लभ्यते।

अथ अभावः कस्मान्नोपसंख्यायते? भावोपसर्जनतया प्रतिभासनात्। तथाहि, नाप्रसिद्धभावसद्भावस्य नारिकेरद्वीपवासिनस्तदभावप्रतीतिरिति। भावपरिज्ञाना-पेक्षित्वादभावस्य न पृथगुपसंख्यानम्। ज्ञाते हि भावे तदभावः प्रतीयत एव। तथाहि, द्रव्यपरिज्ञानात्तदभावपरिज्ञानमे·········· ज्ञानं लभ्यते। तेषाञ्च प्राधान्यमुपदर्शितमेव।

* तत्त्वज्ञानम् * इति सम्यक्त्वस्य विशेष्यं ज्ञानमिति। न तु तत्त्वञ्च तज्ज्ञानञ्चेति। उभयपदव्यभिचारे सामानाधिकरण्याभावात्। तत्त्वं हि पृथिव्यां गन्धः,

न च ज्ञानम्। ज्ञानञ्च मिथ्याज्ञानमपि, न च तत्त्वमिति व्यभिचारेऽपि धर्मधर्मिशब्दान्न सामानाधिकरण्यम्। तत्त्वं हि सम्यक्त्वं ज्ञानधर्म एव।

अन्ये तु तत्त्वे प्रधानत्वादात्मनि साधर्म्यवैधर्म्याभ्यामुपजातमिति मन्यन्ते। प्राधान्यन्तु द्रव्यादिपदार्थानां मध्ये पुरुषस्य। तत्र हि अभ्यासवशादुपजातस्य निःश्रेयसकारणत्वाभ्युपगमात्। न च मिथ्याज्ञाने प्रसङ्गो निःश्रेयसहेतुत्वेन विशेषणात्। मिथ्याज्ञानस्य निःश्रेयसहेतुत्वासम्भवादिति। निःश्रेयसस्य च हेतुर्यथा तत्त्वज्ञानं तथोक्तमेवादिवाक्ये। तच्चात्मज्ञानमितरविविक्तत्वादितरपदार्थज्ञानापेक्षमित्यर्थवद् द्रव्यादिसाधर्म्यवैधर्म्यज्ञानम्।

## तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव।

अथास्तु संग्रहात्तत्त्वज्ञानमवधारणे तु व्याघातः। तथाहि, यदि संग्रहादेव तत्त्वज्ञानम्, सूत्रकारस्य न स्यात् संग्रहाभावात्। अथ संग्रहाद् भवत्येव, तदसत्। मन्दमतेः सत्यपि संग्रहे तदभावात्। अथ संग्रहात् तत्त्वज्ञानमेव, तन्नास्ति दुःखादेरपि दर्शनादित्याशङ्कापरिहारार्थम् * तच्चेश्वरचोदना * इत्यादि। तथाहि, अस्मदादेः संग्रहादेव तत्त्वज्ञानम्। यच्च सूत्रकारस्य ज्ञानं तच्चेश्वरचोदनाभिव्यक्ताद् धर्मादिविशेषादेवेति। न च स एवास्त्विति वाच्यम्, अस्मदादेस्तथाविधधर्माभावात्। तथा संग्रहाद् भवत्येव तत्त्वज्ञानम् यदि नाम * तच्चेश्वरचोदनाभिव्यक्ताद् धर्मादेव * समुच्चीयमानावधारणमनिर्दिष्टप्रतिषेधार्थम्। मन्दमतेस्तु विशिष्टधर्माभावान्न भवत्यपि। अस्तु वा संग्रहात् तत्त्वज्ञानमेव न दुःखादिकम्, यदि नाम ईश्वरचोदनाभिव्यक्ताद् धर्मादेव। यस्य विशिष्टधर्मसद्भावस्तस्याल्पीयसा प्रयासेन तत्त्वज्ञानं सम्पद्यत इति।

यद् वा कस्माद् धर्मस्यादौ सूत्रे व्यावर्णनमीश्वरस्य वा नमस्कार इति चोद्यपरिहारार्थं तच्च तत्त्वज्ञानमीश्वरचोदनाभिव्यक्ताद् धर्मादेव भवतीत्यतस्तस्यादौ प्रतिज्ञानमीश्वरस्य च नमस्कार इति। ईश्वरस्य चोदना सङ्कल्पविशेषोऽस्येदमस्मात् सम्पद्यतामिति। तयाभिव्यक्तात् सहकृताद् धर्मात् तत्त्वज्ञानमिति। तथाधर्मस्य सद्भावे किं प्रमाणमित्यपेक्षायामिदमेवावर्तनीयम् 'ईश्वरस्य चोदनेति'। चोदना हि प्रवर्तकं वाक्यं तत्प्रधानत्वाद् वेदश्चोदनेति। सा चेश्वरप्रणीतत्वात् प्रमाणम्। तयाभिव्यक्तात् प्रकाशिताद् धर्मादेवेति।

**अथ के द्रव्यादयः पदार्थाः? किंस्वरूपाः? किञ्च तेषां साधर्म्यम्? किंरूपञ्च वैधर्म्यम्?**

तदेवं द्रव्यादिसाधर्म्यवैधर्म्यज्ञानस्य निःश्रेयसकारणत्वमभ्युपगम्य तत्स्वरूपपरिज्ञानार्थमाह *अथ के द्रव्यादयः पदार्थाः किंस्वरूपाः किञ्च तेषां साधर्म्यं किंरूपञ्च वैधर्म्यम्* इति। द्रव्यादिषु वा नानारूपतया परैरभिधानात् संशये सतीदम्।

तथाहि, विशेष्यं द्रव्यमिति केचित्।

क्रयविक्रययोग्यञ्चेत्यादि। विपर्यस्तो वा द्रव्यादीनामसत्त्वं मन्यमानः। अथ के द्रव्यादयः पदार्थाः। न सन्तीत्याह। तदभावान्न साधर्म्यं नापि वैधर्म्यमिति।

तथाहि, चक्षुःस्पर्शनाभ्यां रूपस्पर्शयोः प्रतिभासनान्न तद्व्यतिरिक्तं द्रव्यमस्ति। यच्चेदं घटादिज्ञानं तन्न प्रमाणं कल्पनाज्ञानत्वात्। बाधकञ्च प्रमाणमस्ति वृत्तिविकल्पादि। तथा चावयवा अवयविनि वर्तन्त इति नाभ्युपगतम्। अवयवी चावयवेषु वर्तमानः किमेकदेशे वर्तते व्याप्त्या वा? एकदेशेन वृत्ताववयवान्तरप्रसङ्गः। अथैकदेशे वर्तते, अनेकवृत्तित्वव्याघातः, एकद्रव्यञ्च द्रव्यं स्यात्। तत्र चावयवविभागाभावान्नित्यत्वम्, एकस्य च क्रमयौगपद्याभ्यामजनकत्वम्, रूपाद्यनुत्पत्तिश्च, अनेकरूपादेर्जनकत्वाभ्युपगमात्। अवयवेषु चावयवीति प्रतिभासाभावः, तस्यैकद्रव्यत्वात्। अथ न प्रत्येकं परिसमाप्त्या वर्तते, किं तर्हि सर्वावयवेष्वेक एवेति? तत्राप्येकस्वरूपेणावयवान्तरप्रवृत्तौ तेषामेकताप्रसङ्गः, तदवयववृत्तिरूपत्वादवयविनः। स्वरूपान्तरेण चानेकत्वम्, स्वरूपभेदस्य भेदलक्षणत्वादिति वृत्त्यनुपपत्तेरसत्त्वम्। वृत्त्या हि सत्त्वं व्याप्तम्, सा च व्यावर्त्तमाना स्वव्याप्तं सत्त्वं गृहीत्वा व्यावर्तत इत्याशयः। [अ] परस्य गवाश्वादिवद् भिन्नदेशतया ग्रहणम्। तदग्रहे तद्बुद्ध्यभावाच्च, इत्यवयविनोऽसत्त्वे रूपादिसमुदायमात्रं घटादय इति, समुदायः समुदायिभ्यो नार्थान्तरमिति संवृतिसन्नेव।

एवं विज्ञानमात्रं सर्वम्। ततोऽर्थान्तरस्य सद्भावे प्रमाणाभावादित्येवं शून्यवादिवादा अपि यथावसरं निराकर्तव्या इति नेह प्रतन्यते।

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसंज्ञयोक्तानि नवैवेति । तद्व्यतिरेकेणान्यस्य संज्ञानभिधानात् ।**

संशयिताव्युत्पन्नयोर्द्रव्यस्वरूपप्रतिपादनार्थमाह * तत्र द्रव्याणि * इत्यादि । तथाहि, प्रत्यक्षेण रूपादिव्यतिरिक्तस्य द्रव्यस्यावधारणाद् विपर्यस्तव्युदासः । रूपं हि चक्षुषैव गृह्यते स्पर्शस्त्वगिन्द्रियेण । द्वीन्द्रियग्राह्यन्तु द्रव्यम् । कथमेतत् ? प्रतिसन्धानात् । तथाहि, यमहमद्राक्षं चक्षुषा तमेव स्पृशामि, यच्चास्पृशं तमेव पश्यामीति । न च द्वाभ्यामिन्द्रियाभ्यामेकार्थग्रहणं विना प्रतिसन्धानं न्याय्यम् । रूपस्पर्शयोश्च प्रतिनियतेन्द्रियग्राह्यत्वादेतन्न सम्भवतीति ।

अथेदं कल्पनाज्ञानमिति चेत्, किमिदं कल्पनाज्ञानं नामेति ? अथ क्षणिकत्वान्निर्विकल्पकज्ञानसमकालमर्थविनाशे स्मरणानन्तरमेव तद्भवतीति निर्विषयत्वादप्रमाणमिति चेत्, न । क्षणिकत्वासिद्धौ स्मरणानन्तरभाविनोऽपि निर्विकल्पकज्ञानवदर्थान्वयव्यतिरेकानुविधानादर्थजत्वमेव । अथार्थजत्वे निर्विकल्पकज्ञानसमकालमेवार्थस्य सद्भावादिन्द्रियाणाश्चाविचारकत्वेन स्यादेतदिति, तन्न । सहकार्यभावात् । तथाहि, इन्द्रियमर्थेषु सविकल्पकज्ञानोत्पत्तौ सङ्केतस्मरणापेक्षम् । अथ स्मरणे वार्थस्येन्द्रियस्य च किमतिशयाधानमनतिशयनिवृत्तिरिष्यते ? न । तस्यैवातिशयत्वात् । तथाहि, यद् यस्य सद्भावे कार्यं करोति तत्तस्यातिशयः । स्मरणसद्भावे चेन्द्रियं कार्यकृदिति स्मरणमेव तस्यातिशयः । स्मरणाद् वा कारकसाकल्यमेवातिशयः सम्पद्यते, तद्वैकल्यञ्चानतिशयो निवर्तते । साकल्ये हि कार्यकरणादिति । एते यदाहुः,

> यः प्रागजनको बुद्धेरुपयोगाविशेषतः ।
> स पश्चादपि तेन स्यादर्थापायेऽपि नेत्रधीः ॥ ( प्र० विनि०, पृ० ४२ )

इति, एतदपास्तं भवति, उपयोगाविशेषस्यासिद्धत्वात् । तथाहि, निर्विकल्पकबोधे नेन्द्रियस्य सङ्केतस्मरणमस्ति, सविकल्पके त्वस्तीत्युपयोगविशेषः ।

## सविकल्पकज्ञानस्यार्थजत्वविचारः

अथ शब्दाकारं सविकल्पकं ज्ञानम् । शब्दरूपता चार्थे नास्ति, प्रथमेन्द्रियसन्निपात एव सविकल्पकोत्पत्तिप्रसङ्गात् । चक्षुरादिना वा परिच्छेदः, श्रोत्रपरिच्छेद्यत्वेन

दर्शनादिति निर्विषयत्वं सविकल्पकज्ञानस्य, तदसत्। आकारवादप्रतिषेधस्य वक्ष्यमाणत्वान्न शब्दरूपता ज्ञानेऽस्ति। ज्ञानवैलक्षण्ये तु सहकारिवैलक्षण्यमेव कारणमित्युक्तम्।

द्रव्यासत्त्वे चान्यन्निमित्तं वाच्यं प्रतिसन्धानस्य। अथास्त्येवानादिकालपरिपुष्ट-वासनेति चेत्, न। तस्याः सद्भावे प्रमाणाभावात्। अथ सविकल्पकं ज्ञानमेव प्रमाणमिति चेत्, न। अन्यथापि भावात्। तथाहि, अर्थसद्भावेऽप्युपपद्यत इति कथं वासनासद्भावे प्रमाणम्। अन्वयव्यतिरेकाभ्यामन्यत्रापि च कार्यकारणभावावगतिस्तौ चेन्द्रिय-स्येहापि स्त इति। अथ निर्विकल्पकज्ञानोत्पत्ताविन्द्रियस्य व्यापारात्तदधीनतया च सविकल्पकेऽपि व्यापार इव संलक्ष्यते न वस्तुतः। तन्न। अक्षणिकत्वे सत्युभयत्रापि व्यापारसम्भवात्। न च निर्विकल्पकज्ञानमेव सङ्केतस्मृतिद्वारेण सविकल्पकज्ञानोत्पत्तौ कारणमित्यस्ति प्रतिबन्धः। प्रत्यक्षस्य नियमेन स्वलक्षणविषयत्वेन क्रमाविषयत्वात्, अनुमानन्तु सामान्यविषयमेवेति। न च प्रतिबद्धं लिङ्गमस्ति। कार्यञ्चान्यथा सम्भवतीति न क्रमे प्रमाणम्।

स्वसंवेदनवादिनश्च विज्ञानं स्वपरिच्छेदे एव प्रमाणं नार्थान्तरस्येति। यदि च वासनैव निमित्तम्, सा न विज्ञानादर्थान्तरम्, रूपरसगन्धस्पर्शशब्दज्ञानव्यतिरिक्तस्य निमित्तस्यानभ्युपगमात्। तादात्म्ये तु बोधरूपतया सर्वत्राविशेषाद् विकल्पवैचित्र्यं न स्यात्। अथ विकल्पवैचित्र्यादेव वासनावैचित्र्यं न कार्यत इति चेत्, तासाञ्च विज्ञानादभेदे विज्ञानवदेकताप्रसङ्गः, विज्ञानस्य वानेकत्वमनेकार्थतादात्म्यात्। विपर्यये वा तादात्म्यानुपपत्तेः। यदि च वासना विशिष्टज्ञानहेतुर्बाह्या चेति, संज्ञामात्रं भिद्येत अर्थो वासनेति। अथ वस्तुरूपैव वासना, न तर्हि तस्या ज्ञानजनकत्वम्, अर्थक्रिया-कारित्वस्य वस्तुलक्षणत्वात्।

अथ स्मरणानन्तरभावित्वं सविकल्पकत्वम्, तच्चार्थजत्वस्य प्रसाधितत्वान्न दूषणम्। अभ्युपगमे वा निर्विकल्पकस्यापि सविकल्पकत्वप्रसङ्गः। तथाहि, रूपस्मरणा-नन्तरं रसरसनसन्निपाते रसज्ञानमुत्पद्यते। तत्र च रूपस्मृतेः पूर्वकालभावित्वात् समनन्तरकारणत्वं बोधाद् बोधरूपतेति न्यायादस्तु तस्यापि कल्पनात्वं स्मरणा-नन्तरभावित्वात्। न चात्र बोधरूपतया समनन्तरकारणत्वमन्यत्र स्मृतिरूपतयेति वाच्यम्। बोधादर्थान्तरस्य स्मृतिरूपस्य तादात्म्ये सत्यभावात्। न चाभेदे सति

व्यवस्थोपपद्यते क्वचिद् बोधरूपतया समनन्तरकारणत्वं क्वचिद्रूपान्तरेणेति । अतो न स्मरणानन्तरभावित्वं सविकल्पकत्वम् । न चार्थजत्वसिद्धौ नामजात्याद्युल्लेखेनोत्पत्तिर्दूषणमिति । कल्पनात्वस्यासम्भवात् प्रतिसन्धानं द्रव्यसिद्धौ प्रमाणम् ।

एवं घटादिज्ञानस्याप्यालम्बनं वाच्यं तस्य हि सम्यग्ज्ञानत्वात्, न रूपादिसमुदायः, रूपादीनां प्रतिनियतेन्द्रियग्राह्यतया तत्समुदायस्यैकेन्द्रियाविषयत्वात् । न चापरमार्थसतो रूपादिसमुदायस्य ज्ञानजनकत्वम् । तस्य चानुपलब्धत्वे नाणूनां सद्भावे प्रमाणमस्ति, तेषां हि कार्यगम्यत्वात् । न चासंहतः परमाणुरस्ति, षट्केन युगपद् योगादिति तस्याप्यसत्त्वं परमार्थतः । असञ्चीयमानश्चास्मद्दर्शनविषयो न भवत्येवेति घटादिबुद्धेर्निर्विषयत्वप्रसङ्गः । न चाबाध्यमानज्ञानस्यानालम्बनत्वमित्यभिन्नत्वादभिन्नावयविविषयत्वम् ।

अथास्ति वृत्तिविकल्पादिबाधकमिति चेत्, न । तस्याप्रमाणत्वात् । तथाहि, वृत्त्यनुपपत्तेरसत्त्वमिति । किमिदं स्वतन्त्रसाधनमुत प्रसङ्गसाधनमिति ? यदि स्वतन्त्रसाधनम्, अवयवी धर्मी नास्तीति साध्यमिति प्रतिज्ञावाक्ये पदयोर्व्याघातो यथा, इदं नास्ति चेति । हेतोराश्रयासिद्धत्वञ्च धर्मिणोऽप्रसिद्धत्वात् । तथा स्वमते रूपादीनां सत्त्वम् । न च वृत्तिरस्तीति व्यभिचारः समवायानभ्युपगमात् । अथ परव्याप्त्या परस्यानिष्टापादनमिति । परेण हि अवयवी अभ्युपगत इति धर्मित्वेनोपात्तस्तस्य प्रतिपाद्यत्वादिति । तत्र यदि परेण प्रमाणात् प्रतिपन्नस्तेनैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । न चानेनैव तस्य बाधाद् तदन्तरेण पक्षधर्मत्वादिति । अथाप्रमाणेन प्रतिपन्नस्तर्हि प्रमाणं विना प्रमेयस्यासिद्धिरिति वाच्यम्, किमनुमानोपन्यासेन, तस्यापक्षधर्मतया अप्रमाणत्वात् । न च परस्य वृत्त्या सत्त्वं व्याप्तं तदन्तरेणाप्याकाशादावुपलम्भादित्यनेकान्तः स्वरूपासिद्धश्च, वृत्तेः समवायस्य सिद्धत्वात् ।

यच्चेदं नैकदेशेन सर्वात्मना वा वर्त्तत इत्येवमेकदेशस्यावृत्तित्वात् । न च भेदशब्दस्याभिन्नावयविन्युपपत्तिः, बहुषु दृष्टत्वात् । तथाहि, बहूनामन्यतमाभिधानमेकदेशः, निरवशेषता च सर्वशब्दस्यार्थः । तथा विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् प्रकारान्तरेण वृत्तिः प्राप्नोति । अन्यथा हि न वर्त्तत इति वाच्यम् । न चैकदेशे सति वृत्तिर्यथा वंशस्य स्तम्भेषु, निर्देशानामवृत्ति [त्व] प्रसङ्गात् । परमाणूनाञ्च वृत्त्यभावे द्व्यणुकादिप्रक्रमेण कार्यानुत्पत्तिः ।

अथायं विकल्पार्थः, तत्र किं व्याप्त्या वर्त्तते उत, अव्याप्त्या वेति। तत्र रूपा [ ? व ] त् स्वाश्रयव्यापित्वेनाभ्युपगमः, संयोगादिवदव्याप्यत्वं वृत्तित्वेनेति। तथाहि, अवयवेषु अवयवी वर्त्तते समवायवृत्त्या न तु रूपान्तरेणेति स्वभावकल्पोऽपि निरस्तः।

अथ अवयवी गृह्यमाणो यदि अशेषावयवग्रहणाद् गृह्यते मध्यापरभागावयवानामग्रहणाच्चाग्रहणमेव स्यात्। एकावयवग्रहणे तु सास्नामात्रोपलम्भेऽप्युपलम्भः स्यात्, नैतदेवम्। भूयोऽवयवेन्द्रियसन्निकर्षानुगृहीतेन अवयवीन्द्रियसन्निकर्षेण ग्रहणात्। कार्यसद्भावाच्च कारणचिन्ता प्रवर्त्तत इत्यपरोक्षज्ञाने सिद्धेऽवयविन्येतत्कारणमित्युच्यते। एवं देशभेदेनाग्रहणादिति रूपादिभिर्व्यभिचारः। तथाहि, रूपादयो न देशभेदेन गृह्यन्ते तथापि सन्तः परस्परं भिन्नाश्चेति प्रतिभासभेदस्य विद्यमानत्वात्। गवादयोऽपि प्रतिभासभेदादेव भिद्यन्ते न देशभेदात्, निर्देशानामभेदप्रसङ्गात्। एवं तदग्रहे तद्बुद्ध्यभावाच्चेत्ययमपि विरुद्धः। तथाहि, तेषामवयवानामग्रहे तस्मिन्नवयविनि बुद्ध्यभाव इत्ययमर्थोऽवयवग्रहेऽवयविनि बुद्धिरित्यवयविनः सत्त्वम्। तथा च विशेषणग्रहणाद् विशेष्यबुद्धेर्न चासत्त्वं न चाप्यभेदः। तथावयविग्रहेऽवयवग्रहोऽसिद्धः, मन्दमन्दप्रकाशे सति संस्थानमात्रस्यावयविनो ग्रहणादिति। अयश्चावयविवादोऽस्मद्गुरुभिर्विस्तरेणोक्त इति नेह प्रतन्यते। सिद्धे चावयविनि प्रायस्तदाश्रिता गुणादयोऽपि सिद्ध्यन्ति च।

## द्रव्यादिपदार्थोद्देशप्रकरणम्

तत्र द्रव्येषु प्रतिज्ञां करोति *द्रव्याणि* परमार्थसन्तीत्यबाध्यमानज्ञानविषयत्वात्, यद् यदबाध्यमानज्ञानविषयं तत्तत् परमार्थसत्, यथा विज्ञानम्, तथा अबाध्यमानज्ञानविषयाण्यमूनि, तस्मात् परमार्थसन्तीति। अत्र पक्षीकृतेष्वबाध्यमानज्ञानविषयत्वमिति पक्षधर्मत्वम्। परमार्थसति च ज्ञाने ज्ञानविषयत्वं वक्ष्याम इति सपक्षे सत्त्वम्, विपक्षाच्च खरविषाणादेर्व्यावृत्तिरिति। विपरीतार्थोपस्थापकयोः प्रत्यक्षागमयोरनुपलम्भादबाधितविषयत्वम्। असत्प्रतिपक्षोपपत्तेश्च प्रामाण्यमिति।

एवं *पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि* इत्यत्र द्वन्द्वः समासः सर्वेषां स्वातन्त्र्यात्। अत्र च द्रव्याणीति प्रतिज्ञायां द्रव्यत्वयोगः साधनं वक्ष्यति, तथा पृथिव्यादिभेदे च पृथिवीत्वादिविशेषलक्षणमिति। एतानि च *सामान्यविशेषसंज्ञयोक्तानि* सामान्यसंज्ञा द्रव्यमिति, विशेषसंज्ञा च पृथिवीत्वादयस्ताभिरुक्तानि। कियन्ति ? *नवैवेति* अवधार्यन्ते, न्यूनाधिकप्रतिपादकप्रमाणाभावात्। तथाहि, पृथिव्यादिसद्भावस्य वक्ष्यमाणत्वान्न न्यूनता।

अथाधिक्योपलब्धेस्तदभावोऽसिद्धः। तथाहि, छाया द्रव्यम्, क्रियावत्त्वाद् गुणवत्त्वाच्चेति। क्रियावत्त्वञ्च प्रत्यक्षेणापि ज्ञायते, चक्षुर्व्यापाराद् गच्छतीति ज्ञानोत्पत्तेः, देशान्तरप्राप्तेश्च। तथाहि, गतिमती, छाया, देशान्तरप्राप्तिमत्त्वात्, यो यो देशान्तरप्राप्तिमान् स स गतिमानुपलब्धः, यथा देवदत्तः, तथा देशान्तरप्राप्तिमती छाया, तस्माद् गतिमती। गुणवत्त्वञ्च

आतपः कटुको रूक्षश्छाया मधुरशीतला। इत्यागमात्।

तदेतदसत्। भासामभावरूपत्वाच्छायायाः। तथाहि, यत्र यत्र वारकद्रव्येण तेजसः सन्निधिर्निषिध्यते तत्र तत्र छायेति व्यवहारः। वारकद्रव्यगताञ्च क्रियामातपाभावे समारोप्य प्रतिपद्यते छाया गच्छतीति। अन्यथा हि वारकद्रव्यगतं क्रियापेक्षितत्त्वं न स्यात्। यच्चेदं देशान्तरप्राप्तिमत्त्वं तत् किं देशान्तरेण संयोगः समवायो वा ? न संयोगस्तस्यापि साध्यत्वात्। तथाहि, द्रव्यत्वसिद्धौ संयोगः सिध्यति संयोगाद् द्रव्यत्वमितीतरेतराश्रयत्वं स्यात्। अथ देशान्तरप्राप्तिः समवायः ? सोऽप्यसिद्धः, न ह्येकत्र समवेतोऽन्यत्र समवैतीति। छाया त्वेकत्र सम्बद्धोपलब्धा पुनर्देशान्तरेऽप्युपलभ्यते। न च क्रियावत्त्वं देशान्तरसमवायात् सिध्यति, तस्यायुतसिद्धेष्वेव भावादिति, क्रियावत्त्वमसाधनम्। यच्चेदमागमान्माधुर्यं शैत्यं वा छायायास्तदप्युपचारात्। ये हि मधुरद्रव्यस्य शीतद्रव्यस्य वा गुणास्ते छायासंसेवनाद् भवन्तीति तत्कार्यकर्तृत्वेन तथोक्ताः। तस्मात् क्रियावत्त्वाद् गुणवत्त्वाच्च द्रव्यं छायेति न वाच्यम्। न च द्रव्यान्तरमस्तीत्युपपन्नम्, नवैव द्रव्याणीत्यवधारणात्।

अत्र केचिद् द्रव्याणि नवैव न्यूनाधिकप्रतिपादकप्रमाणाभावे सति व्यवच्छेद्यव्यवच्छेदकभावापन्ननवलक्षणयोगित्वात्, उभयाभिमतघटादिनवद्रव्यादिवदिति हेतुं ब्रुवते। तथाहि, आधिक्यप्रमाणाभावो दर्शित एव। न च लक्ष..........यथावसरं वक्ष्याम इति। तथा सर्वज्ञेन मुनिना पृथिव्यादिसंज्ञाव्यतिरेकेण संज्ञान्तरानभिधानाद् द्रव्यान्तरासत्त्वमिति। यदिह भावरूपं तत्सर्वं मयोपसंख्यातव्यमिति हि प्रतिज्ञा मुनेः।

**गुणाश्च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः सप्तदश। 'च' शब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः।**

तथा गुणेषु प्रतिज्ञां करोति * गुणाः * परमार्थसन्तः पूर्वोक्तादेव साधनात् । तथा गुणव्यवहारे गुणत्वयोगं साधनं वक्ष्यति । रूपादिभेदे च तद्विशेषलक्षणमिति । ते तु * रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्चेति कण्ठोक्ताः * सूत्रकारेणेति वचनवृत्त्याभिहिताः, तांश्च वक्ष्यामः । समासश्चात्र द्वन्द्वः । न्यूनाधिकव्यवच्छेदार्थं सामर्थ्यलब्धाः पुनरुच्यन्ते संख्यया * सप्तदश * इति । * 'च' शब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दाः * चेति । अदृष्टशब्देन धर्माधर्मयोरभिधानात् सप्त भवन्तीति ।

अथ संस्कारस्य त्रैविध्यादाधिक्यं स्यात् ? न । संस्कारत्वजात्यपेक्षयैकत्वात् । न चैवमदृष्टत्वं सामान्यमस्तीति । न चान्येषामपि कामक्रोधादीनां सम्भवादुपसंख्यानं कथमिति वाच्यम्, अत्रैवान्तर्भावस्य वक्ष्यमाणत्वात् । * इत्येवम् * उक्तप्रकारेण । * चतुर्विंशतिगुणाः * इति न्यूनाधिकव्यवच्छेदार्थम् । तत्प्रतिपादकप्रमाणाभावे सति परस्परं व्यवच्छेद्यव्यवच्छेदकभावापन्नचतुर्विंशतिलक्षणयोगित्वाद् उभयाभिमतघटादिचतुर्विंशतिद्रव्यवदिति ।

अथ निर्गुणत्वाद् गुणानां संख्यायोगोऽनुपपन्नः ? न, उपचाराभ्युपगमात् । तथा हि मुख्ये बाधकप्रमाणसद्भावे सत्युपचारः कल्प्यते । स च निमित्तापेक्ष इत्यसाधारणधर्मयोगो निमित्तम् । यत्र हि संख्योपलब्धा तत्रासाधारणधर्मयोगोऽपीति तत्स्मरणादध्यारोपः प्रवर्त्तत इति । व्यापकन्तु निमित्तमर्थक्रियाजनकत्वं वा । नैकार्थसमवायस्तस्याव्यापकत्वात् । तथाहि, गुणकर्मणामेकार्थसमवायो न सामान्यादीनामित्यव्यापकमुपचारेऽनिमित्तमेतदिति । नापि धर्मरूपसंख्या तद्व्यतिरेके प्रतिषेधस्य वक्ष्यमाणत्वात् ।

अन्ये तु विशेषणविशेष्यभावेनैव संख्यात्र विशेषणमित्युपचारासम्भवं मन्यन्ते । तथाहि, संख्याविशिष्टज्ञानान्यथानुपपत्त्या विशेषणविशेष्यभावस्य द्रव्य इव गुणादौ चाविशेषोपलब्धेरुपचारः कथम् ? संयुक्तं समवेतं वा विशेषणमिति नियमानभ्युपगमाच्च । नैतदेवम् । गुणकर्मसामान्यानां समवेतानामेव विशेषणत्वोपलब्धेः । न च गुणेषु निर्गुणतया संख्यासमवायः सम्भवति । असमवेतानाञ्च गुणकर्मसामान्यानां विशेषणत्वे मिथ्याज्ञानाद्यभावः, तद्विशिष्टज्ञानस्योभयत्राविशेषादिति वक्ष्यामः । तस्मादुपचरित एव गुणादिष्वेकादिव्यवहारो व्याख्येयः ।

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि। गमनग्रहणाद् भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पवनपतननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि।**

तथा कर्मणि प्रतिज्ञां करोति * कर्माणि * परमार्थसन्ति पूर्वोक्तादेव साधनात्। कर्माणीति व्यवहारे कर्मत्वयोगं साधनमिति वक्ष्यति, उत्क्षेपणादिभेदे च त [त्त] त्सामान्यमिति। तथा * उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि * इति द्वन्द्वः समासः। न्यूनाधिकव्यवच्छेदार्थश्च * पञ्चैव कर्माणि * इत्यवधारणम्। अत्र तु पञ्चलक्षणयोगित्वं सविशेषणं पूर्ववत्साधनम्।

अथ भ्रमणादीनामुपलम्भादवधारणानुपपत्तिः। न। गमन एवान्तर्भावादित्याह * गमनग्रहणाद् भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यक्पवनपतननमनोन्नमनादयो गमनविशेषाः * गमनसङ्गृहीतास्तद्भेदा एव। * न जात्यन्तराणि *

अन्ये तु गमनविशेषा एव न भवन्ति भ्रमणादयः, किं तर्हि ? जात्यन्तराणीति मन्यन्ते। एतच्च असद्व्याख्यानमिति वक्ष्यामः कर्मपरीक्षायाम्।

**सामान्यं द्विविधं परमपरञ्च। तच्चानुवृत्तिप्रत्ययकारणम्। तत्र सत्ता परं महाविषयत्वात्। सा च सत्तानुवृत्तेरेव कारणमिति सामान्यमेव। द्रव्यत्वाद्यपरम् अल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद् विशेषाख्यामपि लभते।**

एवं सामान्ये प्रतिज्ञां करोति * सामान्यम् * परमार्थसदिति पूर्ववत्साधनम्। सामान्यव्यवहारे तु लक्षणं वक्ष्यमाणं साधनमिति भेदं निरूपयति * द्विविधम् * केन रूपेणेत्याह * परमपरञ्च * इति। * अनुवृत्तिप्रत्ययकारणम् * इति कार्येण सत्तां दर्शयति। तथाहि, यदनुगतज्ञानं द्रव्यगुणकर्मनिमित्तं तदर्थान्तरसम्बन्धाद् भवतीति वक्ष्यामस्तत्परीक्षायाम्। तदेतदसाधारणत्वात् सामान्यस्येतरस्माद् भेदकमपि भवति। तथाहि, द्रव्यगुणकर्मनिमित्तमबाध्यमानञ्चानुगतं ज्ञानं न सामान्यं विना भवतीत्यसाधारणमेव। तत्र परापरभेदं निरूपयन्नाह * सत्ता परम् * सामान्यमिति। कुतः ? * महाविषयत्वात् *। तथाहि, द्रव्येष्वेव द्रव्यत्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वम्,

सत्तया द्रव्यादिविषयव्यापकत्वेन महाविषयत्वात् परत्वमिति। यो हि यद्विषयं व्याप्नोति स तदपेक्षया परो यथाल्पविषयपार्थिवापेक्षया महाविषय इति। * सा च सत्तानुवृत्तेरेव कारणमिति सामान्यमेव *। यद्यप्यसामान्यादिभ्यो व्यावर्तते तथापि सामान्यं वस्त्वनुवृत्तज्ञानस्यैव कारणमिति सामान्यमेव। तथा * द्रव्यत्वाद्यपरमिति *। द्रव्यत्वमादिर्येषाम् इत्यादिग्रहणात् गुणत्वकर्मत्वपृथिवीत्वादेर्ग्रहणम्। तच्च सत्तापेक्षया * अल्पविषयत्वाद् * अपरमिति। तद्धि सामान्यलक्षणयोगित्वेन * सामान्य सद् * उपचारतोऽत्र * विशेषाख्यामपि लभते *। न चोपचारो निमित्तं विना [प्र] वर्त्तत इत्याह * व्यावृत्तेरपि हेतुत्वात् * इति। न केवलमनुवृत्तेरेव, किं तर्हि? व्यावृत्तज्ञानस्यापि हेतुत्वात्। विशेषणे हि व्यावृत्तज्ञानजनकत्वं दृष्टं तच्चेहाप्यस्तीत्युपचारः प्रवर्तते। मुख्यास्तु विशेषास्तल्लक्षणयोगिन एव।

**नित्यद्रव्यवृत्तयोऽन्त्या विशेषास्ते च खल्वत्यन्तव्यावृत्तिबुद्धिहेतुत्वाद् विशेषा एव।**

एवं विशेषेषु प्रतिज्ञां करोति * विशेषाः * परमार्थसन्त इति पूर्ववत्साधनम्। * नित्यद्रव्यवृत्तयः * इति। तथा बुद्ध्यादयोऽपि नित्यद्रव्येष्वेव वर्त्तन्त इति विपक्षैकदेशवृत्तिव्यवच्छेदार्थं नित्यद्रव्येषु वृत्तिरेवेत्यवधारणम्, न चैवं बुद्ध्यादय इति। नित्यद्रव्येष्वेव वृत्तिरेव एषामिति सावधारणं वाक्यमेतत्। द्रव्यगुणकर्माणि तु नित्यद्रव्येष्वनित्यद्रव्येषु च वर्त्तन्त इति। सामान्यञ्चाद्रव्येऽपीत्युपपन्नमवधारणम्। नित्यद्रव्येष्वेवेत्यन्ययोगव्यवच्छेदेन नित्यद्रव्येषु वर्त्तमानत्वाद् विशेषा इतरस्माद् भिद्यन्त इति।

अन्ये तु पदार्थापेक्षया लक्षणं विवक्षितमिति नित्यद्रव्येष्वेव वर्त्तमानत्वं हेतुरिति ब्रुवते। तच्चायुक्तम्। विपक्षैकदेशवृत्तेरगमकत्वात्। न च पदार्थापेक्षयाप्ययोगव्यवच्छेदं विना विपक्षैकदेशाद् बुद्ध्यादेरस्य व्यावृत्तिरिति।

नित्यद्रव्यवृत्तय इत्यन्त्यपदस्य विवरणमेतत्। तथा च वक्ष्यति नित्यद्रव्याण्युत्पत्तिविनाशयोरन्ते व्यवस्थितत्वादन्तशब्दवाच्यानि। तेषु भवास्तद्वृत्तयोऽन्त्या इति व्याख्यायन्ते। * ते च * विशेषा विशेषयन्ति व्यावर्तयन्ति स्वाश्रयमाश्रयान्तरादिति। परीक्षार्थमाह ते चात्यन्तं सर्वदा व्यावृत्तिबुद्धेरेव हेतुत्वाद् विशेषा एव? न सामान्यमपीति।

तथाहि, समानजातिगुणक्रियाधाराः परमाणवः, विशेषसम्बन्धिनः, व्यावृत्तबुद्धिविषयत्वात्, यो यो व्यावृत्तज्ञानविषयः स स विशेषसम्बद्धो यथा स्थाण्वादि, तथा च व्यावृत्तज्ञानविषयाः परमाणवः, तस्माद् विशेषयोगिन इति। व्यावृत्तज्ञानविषयत्वञ्च घटादिषूपलब्धमिति नित्येष्वपि साध्यते द्रव्यत्वेनैव हेतुना। न च गुणादीनामन्यतरस्यैव परमाणुषु व्यावृत्तज्ञानकारणत्वम्। समानजातिगुणक्रियाधारत्वेन विशेषितत्वात्। न च दृष्टान्ते गुणादिविशेषोपलब्धेरिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापादनेन विलक्षणविशेषासिद्धिरिति वाच्यम्, सर्वानुमानेषु समानत्वादिति। व्यावृत्तज्ञानजनकत्वेन नित्येषु विशेषाणां सद्भाव इति स्थितम्। विस्तरेण तु विशेषपरीक्षायां परीक्षिष्यन्त इत्यलम्।

**अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः।**

अथ * अयुतसिद्धानाम् * इत्यादिना समवाये प्रतिज्ञां करोति। समवायः परमार्थसन् पूर्वोक्तादेव साधनादिति। लक्षणमुच्यते, इहप्रत्ययहेतुत्वमन्तरालादर्शनस्यापीति सम्बन्धग्रहणम्। तथाहि, दूराद् ग्रामारामयोरन्तरालमपश्यतामिह ग्रामे वृक्षा इति ज्ञानं दृष्टम्, तथाप्याकाशशकुनिसम्बन्धेन व्यभिचारः। तद् इहप्रत्ययहेतुः सम्बन्धश्चेति। तथाहि, इहाकाशे शकुनिरिति ज्ञानं दृष्टम्, तद्व्यवच्छेदार्थम् आधार्याधारग्रहणम्। न चाकाशस्याधारत्वमाधेयत्वं वा, अधरोत्तरभावस्याभावात्। यत्र हि संयोगिद्रव्येष्वधरोत्तरभावस्तत्रैवाधाराधेयभावः कुण्डबदरादावुपलब्धस्तदभावश्चाकाशे, तस्य व्यापकत्वेन शकुनिं व्याप्य सद्भावात्।

अथाकाशस्यातीन्द्रियत्वादिहेति ज्ञानं न स्यात्, तस्य ह्यपरोक्षेष्वेव भावात्। तदसत्। अतीन्द्रियेऽप्याकाशे इहेति ज्ञानं केवलं भ्रान्तम्, तस्य व्यवच्छेदार्थमुपपन्नमाधार्याधारपदम्। इष्टञ्च भ्रान्तेहज्ञानस्य व्यवच्छेदार्थं सम्बन्धपदम्।

अन्ये त्वस्य चोद्यस्य परिहारार्थम् आ समन्तात् काशत इत्याकाशम्, वर्त्तत इत्युपचारेणाकाशं रश्मयोऽभिधीयन्ते। ते च प्रत्यक्षमित्युपपन्नमिहाकाशे शकुनिरिति ज्ञानमिति मन्यन्ते। तच्चासत्, मुख्यसद्भावेऽप्युपचारकल्पनायामतिप्रसङ्गात्। उक्तश्चातीन्द्रियेऽप्याकाशेऽपरोक्षज्ञानं भ्रान्तं तद्व्यवच्छेदार्थं विशेषणमिति। मूर्त्तद्रव्याभावेन चाकाशेन सम्बन्धाभाव एवेति।

तथा ह्याधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवाय इत्युक्ते कुण्डबदरसम्बन्धेन व्यभिचारस्तदर्थमयुतसिद्धानामिति पदम्। युतसिद्धिर्वक्ष्यमाणा, सा विद्यते येषां ते युतसिद्धास्तन्निषेधेन चायुतसिद्धास्तेषामिति। तथाप्ययुतसिद्धानां यः सम्बन्धः सः समवाय इत्युक्ते व्यभिचाराभावः? तन्न। वाच्यवाचकभावेन विषयविषयिभावेन च व्यभिचारात्। तथा ह्याकाशमहत्त्वमाकाशे समवेतं महत्त्वशब्दवाच्यमित्याकाशमहत्त्वतच्छब्दयोर्वाच्यवाचकभावः सम्बन्धो न च युतसिद्धिर्विभिन्नाश्रयसमवायित्वाभावात्। तथा ह्याकाशमहत्त्वमाकाशे समवेतं तद्वाचकश्च शब्दस्तत्रैवेत्ययुतसिद्धत्वम्। एवमिच्छाद्यालम्बनं विज्ञानमात्मनि समवेतमिच्छादयश्च तत्रैवेत्ययुतसिद्धत्वे सत्येषां विषयविषयिभाव इत्यनयोर्व्यवच्छेदार्थमाधार्याधारपदम्। न चात्राकाशमहत्त्वशब्दस्तन्महत्त्वाधारः, नापीच्छाद्यालम्बनविज्ञानं तदाधारमिति।

नन्वेवमप्याभ्यामेव व्यभिचारः। तथा ह्ययुतसिद्धानामाधार्याधारभूतानां यः सम्बन्धः सः समवाय इत्युक्तेऽपि वाच्यवाचकभावविषयविषयिभावाभ्यामेव व्यभिचारः। तथा ह्याकाशशब्देनाकाशमभिधीयत इत्यनयोराधार्याधारभावे सति वाच्यवाचकभावः, न चास्ति युतसिद्धिः। एवमात्मालम्बनमहमिति ज्ञानमात्मन्येवेत्ययुतसिद्धत्वे सत्याधार्याधारभूतयोरस्ति विषयविषयिभाव इति तद्व्यवच्छेदार्थमवधारणमाधार्याधारभूतानामेव यः सम्बन्धः स समवाय इति। वाच्यवाचकविषयविषयिभावयोश्चाधार्याधारभूतेषु तद्विपरीतेषु च सद्भाव इति व्यवच्छेदः।

नन्वेवमयुतसिद्धानामिति व्यर्थमेव, न। अस्यापि सावधारणस्य लक्षणान्तरत्वात्। तथा ह्ययुतसिद्धानामेव यः सम्बन्धः स समवाय इति। वाच्यवाचकविषयविषयिभावौ तु युतसिद्धानामयुतसिद्धानाञ्चेति।

अत्र केचिद् असद्दूषणमुद्भावयन्ति। समवायासिद्धौ युतेष्वाश्रयेषु समवायो न युतसिद्धिः। सा विद्यते येषां ते न युतसिद्धाः। तत्प्रतिषेधेन चायुतसिद्धानामभावे न समवाय इति। एतच्चासद्दूषणम्, लक्षणस्य विद्यमानव्यवच्छेदकत्वात्। यदि ह्यविद्यमानं लक्षणेनोत्पाद्येत भवेदेतद् दूषणमयुतसिद्धानामिति। लक्षणेन समवायाकरणे युतसिद्धानामभावेनायुतसिद्धानामभाव इति लक्षणासम्भव इति, न चैतत्, लक्षणस्य ज्ञापकत्वादिति।

अथायुतसिद्धानामेवाधार्याधारभूतानामेव यः सम्बन्धः स समवाय इति लक्षणद्वयपरिसमाप्ताविहप्रत्ययहेतुरिति व्यर्थम्, न। परीक्षार्थत्वात्। तथाहि, तन्तुषु पट इत्यादि इहप्रत्ययः, सम्बन्धकार्यः, अबाध्यमानेहप्रत्ययत्वात्, यो योऽबाध्यमानेहप्रत्ययः स स सम्बन्धकार्यः, यथेह कुण्डे दधीति प्रत्ययः, तथा चायमबाध्यमानेहप्रत्ययः, तस्मात् सम्बन्धकार्य इति। न चात्र समवायपूर्वकत्वं साध्यते, दृष्टान्तस्य साध्यविकलताप्रसङ्गात्। नापि संयोगपूर्वकत्वम्। किं तर्हि ? सम्बन्धमात्रकार्यत्वम्। स च संयोगादिविलक्षणत्वात् समवाय एवेति वक्ष्यामस्तत्परीक्षायामित्यलमतिविस्तरेण।

**उद्देशप्रकरणोपसंहारः**

## एवं धर्मैर्विना धर्मिणामुद्देशः कृत इति।

एवं द्रव्यादिषु पदार्थेषूक्तेषु सामान्यविशेषसमवायानां लक्षणपरीक्षाश्रवणादन्तेवासिनः प्राक्तनं प्रकरणं किमुद्देशपरं लक्षणपरं परीक्षापरं वेति संशये सति तन्निरासार्थमुपसंहारवाक्यम् * एवम् * इत्यादि प्रधानतया। प्राधान्यं तस्य सर्वत्रोद्देशविधानात्। उद्देशस्तु संज्ञामात्रेण पदार्थाभिधानमिति। लक्षणपरीक्षयोश्च सामान्यादिष्वेव भावादनुषङ्गतोऽभिधानमिति। यद् वा द्रव्यादिपदार्थपरिज्ञानान्निःश्रेयसमिति मत्वा प्रवृत्तस्तदुद्देशपरिज्ञानमात्रान्निःश्रेयसालाभेऽतिप्रतारकतां मन्यमानः श्रवणादन्तेवासी मा व्यावर्ततामिति तदाश्वासनार्थं वाक्यम् * एवं धर्मैर्विना धर्मिणाम् * केवलानामुद्देशः कृतो न लक्षणं नापि परीक्षा। तत्तद्द्वारेण साधर्म्यवैधर्म्यपरिज्ञानं श्रौतमुपजातमभ्यासवशाद् आत्मन्यशेषविशेषालिङ्गिते विज्ञानमपरोक्षं कुर्वन् निःश्रेयसमुपजनयतीति।

**पदार्थसंख्यावधारणस्य युक्तत्वविचारः**

ननु षडेव पदार्था इत्यवधारणाभ्युपगमे धर्माणां व्यतिरेकासम्भवात् कथमस्तित्वादिभिर्विना धर्मिणामुद्देशः कृत इति ? न। अवधारणस्य धर्मिविषयत्वाभ्युपगमात्। तन्न। अस्तित्वादयोऽपि स्वाधिकरणधर्मापेक्षया धर्मिण एवेति, तदपेक्षयापि व्याहतमवधारणम्। तथा ह्यस्तित्वमभिधीयमानत्वाद् अभिधेयत्वाधिकरणम्, एवमभिधेयत्वमस्तित्वाधिकरणमित्यादि योज्यम्।

अथासाधारणधर्माधिकरणत्वेनावधारणमर्थवत्। तदसत्। अस्तित्वादेरप्यसाधारणधर्माधिकरणत्वात्। तथा ह्यस्तित्वमभिधेयत्वाद् भिद्यतेऽभिधेयत्वञ्चास्तित्वाद् भिद्यत इति। न चासाधारणधर्मसम्पर्कं विना व्यावृत्तिर्घटत इत्यसाधारणधर्माधिकरणत्वेनावधारणासम्भव इति चेत्, नैतदेवम्। क्रियावद् गुणवद् समवायिकारणमिति द्रव्यलक्षणम्

( वै. सू. १।१।१५ ), अयोगान्ययोगव्यवच्छेदे द्रव्याश्रितत्वं गुणानाम्, तथा क्षणिकत्वे सति नियमेन मूर्त्तद्रव्यवृत्तित्वं कर्मणाम्, नित्यत्वैकत्वे सति समवायेनानेकवर्त्तमानत्वं सामान्यस्य, अयोगान्ययोगव्यवच्छेदेन नित्येष्वेव [ द्रव्येषु ] वर्त्तमानत्वं विशेषाणाम्, नियमेनायुतसिद्धसम्बन्धत्वं समवायस्येत्येवं धर्माधिकारिणः षडेवेत्यवधारणेऽप्रदोषः।

अथ व्यतिरिक्तानामपीयत्ताऽसम्भवादसंख्यातत्वेन तत्त्वज्ञानाविषयत्वमिति चेत्, न। पृथिव्यामिवानन्त्येऽप्येकस्य निमित्तस्योपग्रहात् तत्त्वज्ञानविषयत्वमिति। निमित्तन्तु तत्र पृथिव्यां पृथिवीत्वम्, धर्मेषु धर्मरूपतेति।

अथ धर्मेषु नित्यत्वमुतानित्यत्वमिति चेन्नित्यत्वेऽपि धर्मिविनाशे सत्तावदवस्थानाभ्युपगमाददोषः। अनित्यत्वेऽपि द्रव्यस्यैव समवायिकारणत्वाद् गुणादिषु नोत्पत्त्यभावः, विनाशवन्निमित्तकारणादेवोत्पत्त्यभ्युपगमात्। तथाहि, द्रव्यगुणकर्मात्मकं कार्यं समवाय्यादिकारणेभ्यो निष्पद्यमानं दृष्टं विपरीतन्तु निमित्तादेव। तथा च धर्माः, निमित्तादेवोत्पद्यन्ते, द्रव्यगुणकर्मव्यतिरेकिकार्यत्वात्, यद् यद् द्रव्यगुणकर्मव्यतिरेकिकार्यं तत्तन्निमित्तकारणादेवोत्पद्यमानं दृष्टम्, यथा विनाशः, तथा च धर्मा द्रव्यगुणकर्मव्यतिरेकिकार्याः, तस्मान्निमित्तकारणादेवोत्पद्यन्ते। उत्पत्तिधर्माणाञ्चानित्यत्वं दृष्टमित्यस्तित्वादयोऽप्यनित्या इति। अस्तित्वञ्चास्तीति प्रत्ययनिमित्तम्, येन सोऽस्तीति प्रत्ययो भवतीति। अभिधेयत्वं वाभिधेयप्रत्ययकारणमित्यादि सर्वत्र योज्यम्।

अव्यतिरेके तु व्यतिरिक्तैर्धर्मैर्विना धर्मिणानुद्देशः कृत इति व्याख्यानम्। व्यतिरेके बाधकप्रमाणोपपत्तेर्व्यतिरिक्तेति विशेषणं सामर्थ्याल्लभ्यत एव। तथा ह्यवधारणानुपपत्तिर्व्यतिरेकपक्षे।

अथोक्तं विशिष्टधर्माधिकरणत्वेनावधारणं विवक्षितमिति, तन्न। उक्तलक्षणानां षडेव पदार्था इत्यवधारणे साधारणधर्माधिकरणानां पदार्थान्तराणामपरिसंख्यातत्वात् तत्त्वज्ञानासम्भव एव। तत्त्वज्ञानार्थञ्चावधारणम्। न च पदार्थान्तराणामज्ञेयत्वम्, सर्वस्य भावप्रपञ्चस्य ज्ञेयतयोपक्षेपात्। तेषु च सामान्यविशेषरूपतया तत्त्वज्ञानं कार्यम्। सामान्यं भावरूपता, विशेषस्तु द्रव्यादिवल्लक्षणयोगः। तदतिरिक्तेषु च पदार्थेषु सामान्यतो ज्ञानं न विशेषत इति।

अथ द्रव्यादिलक्षणवद् धर्मरूपताविशेषस्य सद्भावविशेषेणापि तत्त्वज्ञानविषयत्वमिति चेत्, तर्हि पदार्थान्तरसद्भावेऽपि नियतलक्षणापेक्षयावधारणाभ्युपगमे षडेवेत्यपि

न वाच्यम्। समवायसद्भावेऽपि पूर्वलक्षणापेक्षया पञ्चैवेति स्यात्। एवमुत्तरोत्तर-पदार्थसद्भावेऽपि पूर्वपूर्वलक्षणापेक्षयावधारणाभ्युपगमे सत्येक एव पदार्थः स्यात्। तथाहि, द्रव्यलक्षणयोगे एक एव पदार्थो नान्यस्तस्य हि द्रव्यलक्षणयोगित्वे द्रव्य एवान्तर्भावात्।

अथ गुणादिषु विभिन्नलक्षणसम्बन्धिषु तत्त्वज्ञानाभावप्रसङ्गान्नैवमवधारणम्। एवं तर्हि धर्मेषु षड्लक्षणालक्षितेषु तत्त्वज्ञानाभावप्रसङ्गात् षडेवेत्यवधारणमन्याय्यम्। प्रतिज्ञातश्च पदार्थेषु साधर्म्यवैधर्म्यप्रतिज्ञानम् [?]।

**धर्मस्वरूपविचारः**

तथा धर्मरूपतायाः सकलभेदाव्यापितया न धर्मेषु तत्त्वज्ञानम्। तथाहि, धर्म-रूपतायां किमन्या धर्मरूपताऽस्ति ? उत नास्तीति। सद्भावे तस्यामन्याभिधेयतेत्यन-वस्थायां धर्मरूपतायाश्चानेकत्वादेकस्य निमित्तस्योपग्राहकस्याभावान्न धर्मेषु तत्त्वज्ञानं स्यात्।

न च पृथिवीत्वं विनानुगताकारं धर्मेषु सामान्यमस्तीति, धर्मो धर्म इत्यनुगतज्ञान-स्यासंवेदनात्। यदि चानुगताकाराशेषधर्मव्यापिका स्याद् धर्मरूपता, तस्यास्तर्हि सामान्य-रूपत्वात् तद्योगितया धर्माणां द्रव्यादिष्वेवान्तर्भावः, द्रव्यादित्रयस्य सामान्यविशेष-वत्त्वाभिधानात्। न च धर्मत्वस्य सामान्यलक्षणयोगित्वे सामान्याद् व्यतिरेकः सिध्यति, द्रव्यत्वादेरपि व्यतिरेकप्रसङ्गात्। तथाधर्मरूपतायाश्च धर्मत्वायोगेन धर्मेऽप्यन्तर्भावा-सम्भवादिति पदार्थान्तरत्वं स्यात्। यथा चास्तित्वादिषु धर्मरूपत्वं तथा धर्मत्वेऽप्यन्येऽ-स्तित्वादयः, तेषु चाप्यन्यद् धर्मत्वमित्यनवस्थां नातिवर्त्तते।

अथ यदेव धर्मत्वमस्तित्वादेराधेयं तदेवान्येषामाधारस्तदाधेयश्चेति न युक्त-मेतत्। एकस्मिन् काले यद् यस्याधारस्तत्तस्यैवाधेयमित्यनुपलम्भात्। तथास्तित्वादेरप्येकस्य निमित्तस्यानेकत्रानुवृत्तौ सामान्यान्तर्भावस्तल्लक्षणयोगित्वात्।

यदि चैकं नित्यमस्तित्वं सर्वत्र पदार्थेष्वस्तीति प्रत्ययजनकं स्यात् किं सत्तया ? स्वरूपसत्त्वेन वा ? अथानेकं प्रतिपदार्थमस्तित्वाभिधेयत्वादीति चेत्, न। धर्मिविनाशेऽपि सत्तावदवस्थानम्। तथाहि, एकाश्रयविनाशेऽप्येकतया सत्तायाः पदार्थान्तरेऽपि सत् सदिति प्रत्ययजनकत्वेनावस्थानम्। धर्माणान्तु प्रतिपदार्थनियतत्वाद् आश्रयान्तरेऽस्तीतिप्रत्यय-जनकोऽन्य एव धर्म इति नाश्रयविनाशेऽप्यवस्थाने प्रमाणमस्तीति।

अथ द्रव्यस्यैव समवायिकारणत्वेन गुणादिषूत्पत्तिकारणाभावाद् आश्रयविनाशेऽव्यवस्थानमिति चेत्। एवं तर्हि द्रव्येष्वनित्यं गुणादिषु च नित्यमिति स्यात्। इष्यत एवेति चेत् तर्हि विनाशवन्निमित्तकारणादेवोत्पद्यन्तेऽस्तित्वादय इति व्याहतमेतत्। तथास्तित्वादेः प्रतिपदार्थनियतत्वेनानन्त्यात् तेष्वेवास्तीत्याद्यभिन्नव्यवहारदर्शनाद् एकमस्तित्वेष्वस्तित्वमभिधेयत्वेष्वभिधेयत्वं तत्राप्यन्येऽस्तित्वादय इति प्राक्तनमेव दूषणमभ्यूह्यम्।

न चास्तित्वादेर्नियतधर्मिसम्बन्धाभावे व्यपदेशनियमोऽस्यायं धर्म इति घटते। अथास्तित्वसम्बन्धो यदि समवायस्तर्हि धर्माणां समवायितया द्रव्यादिष्वन्तर्भावः, द्रव्यादीनां पञ्चानां समवायित्ववचनात्। यद्यन्यः सम्बन्धो धर्मात्मकस्तस्यायुतसिद्धसम्बन्धत्वे कथं समवायाद् व्यतिरेकः? व्यतिरेके वा स एव धर्मो धर्मिव्यापकोऽस्त्वलं समवायेन। तस्य च सम्बन्धान्तराभ्युपगमेऽनवस्था स्यादिति स्वात्मवृत्तित्वमभ्युपेयम्। स्वात्मवृत्तित्वं समवाय एव।

यच्चानुमानं निमित्तकारणादेवोत्पद्यन्ते धर्माः, द्रव्यगुणकर्मव्यतिरेकिकार्यत्वाद् विनाशवद् इत्यत्र कार्यत्वस्य स्वकारणसत्तासम्बन्धरूपतायामसिद्धो हेतुः। विनाशस्य च स्वकारणसत्तासम्बन्धाभावात् साधनविकलश्च दृष्टान्तः। द्रव्यादिव्यतिरेके च प्रमाणाभावात् सन्दिग्धविशेषणो हेतुः। अथ षट्पदार्थेष्वस्तीति ज्ञानं व्यतिरेके प्रमाणम्। तथाहि. द्रव्यादिष्वस्तीत्यादिज्ञानानि षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानि, षट्पदार्थेषूत्पद्यमानत्वात्, यानि तु षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानि न भवन्ति न तानि षट्सूत्पद्यन्ते यथा द्रव्यादिज्ञानानि, तथा षट्सु नोत्पद्यन्तेऽस्तीत्यादिज्ञानानि, तस्मात् षट्पदार्थव्यतिरिक्तविधीयमाननिमित्तनिबन्धनानीति व्यतिरेकी। तथाहि. षट्पदार्थेष्वस्तीति ज्ञानं तथा अभिधेय इत्युत्पद्यमानं दृष्टमिति पक्षधर्मत्वम्। न च षट्पदार्थव्यतिरिक्तभावरूपनिमित्तनिबन्धनमुभयाभिमतं विज्ञानमस्तीति सपक्षाभावः। द्रव्यादिज्ञानन्तु षट्पदार्थव्यतिरिक्तभावरूपनिमित्तनिबन्धनं न भवतीति विपक्षस्तस्माच्च षट्पदार्थेषूत्पद्यमानत्वं हि द्रव्यादिव्यावृत्तम्। तथा हि द्रव्यज्ञानं द्रव्य एव न तु गुणादिषु, एवं गुणज्ञानं गुण एव न कर्मादिष्वपीति न षट्सूत्पत्तिरिति विपक्षव्यावृत्तिरेव। विपक्षे प्रत्यक्षागमाभ्यां विरुध्यत इति न कालात्ययापदिष्टः। विशेषानुपलब्धेरयोगाद् न प्रकरणसम इति। तस्माद् व्यतिरेकसिद्धौ न सन्दिग्धविशेषणो हेतुरिति, नैतदेवम्, षट्सु

पदार्थेषूत्पद्यमानत्वं व्यक्त्यपेक्षयाऽसिद्धम्। तथा ह्येकमस्तीति ज्ञानं षट्सु पदार्थेषूत्पद्यते। एवमभिधेयज्ञानञ्चेति। अथ अस्ति द्रव्यम्, अस्ति गुण इत्येवंजातीयकं ज्ञानं षट्सूत्पद्यत इति नास्त्यसिद्धता। तर्हि द्रव्यगुणादिज्ञानं ज्ञानजातीयं षट्सूत्पद्यते। न च षट्पदार्थातिरिक्तभावरूपनिमित्तनिबन्धनमिति व्यभिचारः। यच्च षट्पदार्थातिरिक्तं भावरूपनिमित्तं तस्यानुवृत्तव्यावृत्ततायां प्राक्तनमेव दूषणमूह्यम्। सत्तासम्बन्धेन च पदार्थेषु भावव्यतिरेकाभ्यामस्तीति ज्ञानमुत्पद्यमानं दृष्टमिति विरोधः। अस्तित्वधर्मादेवास्तित्वज्ञानमिति चेत् तर्हि सत्तायाः सद्भावे किं प्रमाणमिति वाच्यम्, प्रत्ययवैलक्षण्याभावादित्यतो न व्यतिरेके प्रमाणमस्तीत्यप्रसिद्धविशेषणो हेतुरिति सत्यम्। यदि च अभूत्वा भावित्वमात्रं कार्यत्वमिष्टं स्यात्तदप्यस्तित्वादिषु सन्दिग्धम्। तथा ह्याश्रये सत्युपलम्भादस्तित्वादेर्न ज्ञायते किमाश्रया वा ते सन्तोऽभिव्यज्यन्ते सामान्यवत्, उतोत्पद्यन्ते रूपादिवदिति। न च निमित्तकारणं विशेषतो निर्देष्टुं शक्यते। अथ गुणाश्रयास्तदाधारास्तेषां निमित्तमिति चेत्, एवं तर्हि गुणादीनां कार्याधारतया समवायिकारणत्वादिति निमित्तादेवोत्पत्तिर्विरुध्यते। तथाहि, नियमेनाधार्याधारयोर्यः सम्बन्धः स समवाय एव। अन्यत्वे वा समवायलक्षणं व्यभिचारि स्यात्। असम्बन्धे चोक्तमेव दूषणमित्यतिरिक्तैः * धर्मैर्विना धर्मिणामुद्देशः [कृतः] * इति सिद्धम्।

अन्ये तु धर्मैः सह धर्मिण उद्देशः कृतः। केनेति ? * विना * पक्षिणा उलूकेन। सामान्यशब्दश्च विशेषे वर्त्तते प्रकरणादिति ब्रुवते।

**षट्पदार्थसाधर्म्यम्**

**षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेयत्वानि। आश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्यः।**

अथ अव्यतिरेकेऽस्तित्वादीनां पदार्थान्तर्भावात् तद्विशेषेऽपि साधर्म्यरूपतया परिज्ञानार्थमाह * षण्णामपि पदार्थानाम् *। अस्तित्वञ्चाभिधेयत्वञ्च ज्ञेयत्वञ्चेति समाहारद्वन्द्वः। न परमस्तित्वादयः षण्णां धर्मास्तथाश्रितत्वञ्चेति। तस्य नित्येष्वसम्भवाद् अव्यापकत्वेन पृथगभिधानमित्याह * आश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्यः * इति।

अथाव्यतिरेकेऽस्तित्वादीनां क्वान्तर्भाव इति चेत्, शब्दव्यवहारस्य विवक्षितत्वादस्तेः शब्दरूपस्य भावोऽस्तित्वं ज्ञानमेव, येन सताऽस्तीत्यभिधानं प्रवर्त्तत इति। ज्ञानरूपस्य च अस्तेर्भावोऽस्तित्वमिति विवक्षायां सत्तास्वरूपं सत्त्वं वा लभ्यते। तत्सद्भावे द्रव्यादिष्वस्तीतिज्ञानदर्शनात्। अस्ति चायम् अस्तिशब्दो ज्ञाने, तद्विषयेऽ-

भिधाने चेति ।

तथा अभिधेयस्य च भावोऽभिधेयत्वम्, अभिधेय इति ज्ञानमेव । तेन सता अभिधेयोऽयमर्थ इति शाब्दव्यवहारदर्शनात् । तच्चाभिधानजनितं ज्ञानमर्थ इति ।

तथा ज्ञेयस्य भावो ज्ञेयत्वं ज्ञेयमिति ज्ञानमेव । तेन सता ज्ञेयमिति शाब्दव्यवहारदर्शनात् । तच्च ज्ञानेन विशेषणेन जनितं ज्ञानमर्थ इति ।

तथा आश्रितानां भाव आश्रितत्वम् आश्रयाश्रयिभावलक्षणा वृत्तिः । सा च आकाशादिषु न, तेषामाश्रयाभावात् । न च आश्रयाश्रयिभावस्य समवायरूपतायां समवायेऽसम्भवात् न षट्पदार्थव्यापित्वम् । अथ पञ्चानां समवायलक्षणा वृत्तिराश्रितत्वम्, समवायस्तु स्वात्मवृत्तिरिति चेत्, एवं तर्हि पञ्चानां समवायित्वमिति पुनरुक्तं स्यात् । तथाहि, समवायित्वं समवायलक्षणा वृत्तिः सा च पञ्चानामाश्रितत्वपदेनोक्तेति आश्रितत्वपदेन आश्रितत्वोपलक्षितस्येहाभिधानाददोषः ।

अथ व्यतिरिक्तस्य निमित्तस्यासम्भवात् समवाये भावप्रत्ययः कथम्, आश्रितस्य समवायस्य भाव आश्रितत्वमिति ? नैतदेवम् । समवायस्य वृत्तिरूपतया वृत्तिमदाश्रितत्वोपलब्धेर्वृत्त्यन्तरकल्पनायामनवस्था स्यादित्युपचरिता वृत्तिरिष्यते । सा च अन्यनिमित्तस्यासम्भवादाश्रितत्वज्ञानहेतुः समवाये वृत्तिविशेष एव । आत्मवृत्तित्वे तु समवायस्य स्वयं वृत्तिरूपत्वाद् वृत्त्यन्तरं नापेक्षितमित्युपगमेनाश्रितत्वमेव ।

अव्यतिरेके हि आश्रयाश्रयिव्यवहारासम्भवादतः समानलक्षणवृत्तिप्रतिषेध एवेति वक्ष्यामः समवायपरीक्षायामित्यलम् ।

पञ्चपदार्थसाधर्म्यम्

## द्रव्यादीनां पञ्चानामपि साधर्म्यं समवायित्वमनेकत्वञ्च ।

इदानीं समवायपरित्यागेन पञ्चानां साधर्म्यमाह * द्रव्यादीनाम् * इत्यादिना । द्रव्यमादिर्येषां ते द्रव्यादयस्तेषाम् । न ज्ञायते कियतामित्याह * पञ्चानामपि साधर्म्यं समवायित्वमनेकत्वञ्च * इति । समवायो विद्यते येषां ते समवायिनस्तेषां भावः समवायित्वं समवायलक्षणा वृत्तिरिति । अनेकत्वञ्च समानलक्षणयोगित्वे सति व्यक्तिभेदोऽनेकत्वसंख्या वोपचरिता । समवाये तु समानलक्षणयोगिनि न व्यक्तिभेदो नाप्यनेकत्वसंख्येति ।

## गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे ।

इदानीं द्रव्यपरित्यागेन साधर्म्यं दर्शयति [* गुणादीनाम् *] गुण आदिर्येषां ते तथोक्तास्तेषाम् । न ज्ञायते कियतामतः * पञ्चानामपि * साधर्म्यं निर्गुणत्वञ्च निष्क्रियत्वञ्चेति * निर्गुणत्वनिष्क्रियत्वे * । निर्गता गुणा येभ्यस्ते निर्गुणास्तेषां भावो निर्गुणत्वं गुणाभावः ।

अथ अभावस्याभावतया धर्मत्वाभाव इति चेत्, न । विशेषणत्वेन तदुपपत्तेः । तथाहि, गुणाभावेन सता गुणादिषु अन्वयव्यतिरेकाभ्यां निर्गुण इति व्यवहारदर्शनाद् ज्ञायते गुणाभावस्य विशेषणत्वेन धर्मत्वमिति । स च पञ्चसु समानत्वात् साधर्म्यमिति ।

षडेव पदार्था इत्यवधारणञ्च भावविषयमित्यभावस्य व्यतिरेकेऽपि न दोषः । आश्रितस्य धर्मत्वेऽपि समवेत एव धर्म इति नियमानभ्युपगमाच्चेति ।

निष्क्रियत्वन्तु निर्गता चलनलक्षणक्रिया येभ्यस्ते निष्क्रियास्तेषां भावो निष्क्रियत्वम् क्रियाभावः साधर्म्यम् । तेन सता निष्क्रिया इति व्यवहारदर्शनात् ।

अन्ये तु गुणाभावोपलक्षितः समवायो निर्गुणत्वम्, क्रियाभावोपलक्षितश्च निष्क्रियत्वमिति मन्यन्ते । तच्चासत् । समवाये धर्मि [णि] समवायान्तरस्यासम्भवान्निर्गुणव्यवहारो न स्यात् । अभेदे हि धर्मधर्मिव्यवहारादर्शनात् ।

### पदार्थत्रयसाधर्म्यम्

## द्रव्यादीनां त्रयाणामपि सत्तासम्बन्धः, सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वञ्च ।

द्रव्यादित्रयस्य साधर्म्यमाह [*द्रव्यादीनाम्*] । द्रव्यमादिर्येषां तानि द्रव्यादीनि, तेषाम् । न ज्ञायते कियतामित्यतः * त्रयाणामपि सत्तासम्बन्धः * साधर्म्यम् । सत्तायाः सम्बन्धः सत्तोपलक्षितः समवाय इति ।

### सदसत्प्रत्ययजनन्यां सत्तायां शङ्कासमाधाने

ननु द्रव्यादिषु सत्तायाः सद्भावे किं प्रमाणम् ? सद्द्रव्यं सद्गुणः सत्कर्मेति

प्रत्यय एव । तथाहि, सदिति ज्ञानं विशिष्टज्ञानत्वान्नर्ते विशेषणाद् भवतीति सत्तासद्भावः ।

नन्वेवं तर्हि त्रयाणामित्ययुक्तं सामान्यादिष्वपि सत्सदिति ज्ञानोत्पत्तेः । तथाहि, सत् सामान्यम्, सन्तो विशेषाः, सन् समवाय इत्यपि विशिष्टज्ञानदर्शनाद् वाच्यः सत्तासम्बन्ध इति ।

अथ स्वात्मसत्त्वात् सामान्यादिषु सत्सदिति ज्ञानमिति चेत्, एवं तर्हि द्रव्यादिष्वपि तदेवास्तु किं सत्तया ? न च सत्सदिति ज्ञानस्य वैलक्षण्यं विना निमित्तद्वयसन्निकर्षोद्भावने प्रमाणमस्तीति सत्ता स्वरूपसत्त्वं वा सर्वत्राभ्युपेयम् । तथाहि, द्रव्यादिषु, सत्सदिति ज्ञानं स्वात्मसत्त्वाद् भवति, सत्सदिति ज्ञानत्वात्, सामान्यादिषु सत्सदिति ज्ञानवत् ।

यद् वा सामान्यादिषु सत्सदिति ज्ञानम्, सत्ताकार्यम्, सत्सदिति ज्ञानत्वात्, द्रव्यादिषु सत्सदिति ज्ञानवद् इत्येतदसत्, सामान्यादिषु सत्तासम्बन्धे बाधकोपपत्तेः । तथाहि, सामान्ये सत्तासम्बन्धकल्पनायां सत्तायामपि सत्सदितिज्ञानदर्शनाद् अन्यः सत्तासम्बन्धस्तत्रापि इत्यनवस्था ।

विशेषेषु च सत्तासम्बन्धित्वात् संशयोपपत्तौ निर्णयार्थमन्यो विशेषस्तत्रापि अन्यः सत्तासम्बन्ध इति संशयविषयत्वान्निर्णयार्थमन्यो विशेष इति संशयनिर्णयविशेषानवस्था अत्र प्रसज्येत ।

समवाये च सत्ताया वृत्त्यभाव इति बाधकोपपत्तेर्न सामान्यादिषु सत्तासम्बन्ध इति ।

ननु स्वरूपसत्त्वेऽपि समानमेतत् । तथाहि, यद्येकं स्वरूपसत्त्वं सामान्यादिषु तत्रापि सत्तावदनवस्थानादिदोषः । अथ प्रतिपदार्थनियतम्, तस्य व्यावृत्तरूपतायां सत्सदिति ज्ञानजनकत्वं न स्यात्, अस्य हि अनुगतत्वात् । न । अन्यथा तदुपपत्तेः । तथाहि, सामान्यादिषु सत्तासमवाये बाधकोपपत्तेः सत्सदिति ज्ञानमुपचरितम् । उपचारश्च प्रवर्त्तमानो निमित्तमपेक्षते इति स्वात्मना साधारणधर्मेणोपचारनिमित्तेन सत्तावत्त्वं सत्सदिति प्रत्ययजनकत्वम्, यत्र हि सत्ता साधारणधर्मो दृष्ट इति तदुपलम्भात् सत्ताध्यारोपः प्रवर्त्तत एवेति । सामान्यादिषु सत्सदिति ज्ञानस्यान्यथापि भावादन्यथा-

सिद्धो हेतुरिति । न च द्रव्यादिषु सत्सदिति ज्ञानस्यासाधारणधर्मादेवोत्पत्तिरिति वाच्यम् । मुख्ये बाधकासम्भवात् । न च मुख्यं विना क्वचिदुपचारो दृष्ट इति द्रव्यादिषु सत्तासमवायादेव सत्सदिति ज्ञानं दृष्टमिति सिद्धम् ।

अन्ये तु सत्सदिति ज्ञानस्य सत्ताविशेषणजनितत्वादेकत्र समवेतत्वेन विशेषणमन्यत्र विशेषणविशेष्यभावेन इत्युभयत्रापि मुख्यतां ब्रुवते । तथाहि, न संयोगसमवायायत्तो विशेषणविशेष्यभावः, अभावे तदभावप्रसङ्गात् । अथ विशिष्टज्ञानप्रतिबन्धो यत्र हि विशिष्टज्ञानं तत्र विशेषणविशेष्यभावः । तत्र हि सामान्यादिष्वपि सत्सदितिविशिष्टज्ञानोत्पत्तेर्विशेषणविशेष्यभाव एव सम्बन्ध इत्युभयत्रापि मुख्यं सत्सदिति ज्ञानम् ।

एतच्चासत् । यत्र हि गुणकर्मसामान्यानां विशेषणत्वम् उभयाभिमतं तत्र तत्र समवायेनेति दृष्टम् । सामान्यादिषु सत्तायाः समवायस्य व्यापकस्य व्यावृत्तेर्विशेषणत्वस्य व्याप्यस्य व्यावृत्तिरिति केवलं तत्सहचरितधर्मोपलब्धेः सत्ताध्यारोप इति युक्तम् । अन्यथा हि सर्वत्र गौणप्रत्ययोच्छेदो मिथ्याज्ञानस्य चेति । तथाहि, सिंहो माणवक इति माणवकेऽपि सिंहत्वं विशेषणम्, सिंह इवेति मुख्यमेव ज्ञानं स्यात् । तथा शुक्तिकायां रजतमिति ज्ञाने रजत इव रजतत्वं विशेषणमिति मिथ्यात्वं न स्यात् । अस्ति च मिथ्याज्ञानमिति प्रवक्ष्यामस्तदधिकारे ।

अथ सिंहत्वायोगिनि माणवके तत्सहचरितधर्मोपलम्भात् सिंहत्वाध्यारोपेणोत्पादाद् गौणत्वम् । तथा शुक्तिकायां रजतसाधर्म्ये उपलब्धे रजतत्वाध्यारोपेणोत्पादान्मिथ्यात्वमिति चेत्, कथमेतत् ? माणवके सिंहत्वस्य समवायेनानुभवाभावात् । तथा शुक्तिकायां रजतत्वस्य समवायेनानुभवाभावात् । अतः स्मर्यमाणस्याध्यारोपेण सिंहत्वस्य माणवके व्यापारस्तथा रजतत्वस्य शुक्तिकायामिति प्रयुक्तं गौणत्वं मिथ्यात्वञ्चेति । तर्हि सामान्यादिषु सत्ताध्यारोपेण सत्सदिति ज्ञानं न्याय्यं सत्तासमवाये बाधकोपपत्तेरिति । नन्विवार्थस्य सामान्यादौ सत्सदिति ज्ञानेऽप्रतिभासनादुपचारः कथम् ? यत्र हि इवार्थः प्रथते तदुपचरितं ज्ञानम्, अन्यथा हि अध्यारोपाविशेषे मिथ्याज्ञानेनाविशेष एव स्यात् । नैतदेवम् । सिंहत्वायोगिनं पुरुषं प्रतिपद्यमानोऽपि सिंहोऽयमिति प्रतिपद्यते । न चैवं रजतत्वायोगिनीं शुक्तिकां प्रतिपद्यमानो रजतमिति प्रत्येति । तथा च मिथ्याज्ञाने पश्चाद् बाधकं वेद्यमिति । गौणज्ञाने

तु पूर्वमपि बाधकमस्त्येव, केवलन्तु शौर्यख्यापनाय माणवकं सिंह इति व्यवहरन्ति। मिथ्याज्ञाने तु अतस्मिंस्तदेवेदमिति मन्यन्ते। अस्ति च सामान्यादौ सत्सदिति ज्ञानम्, न चास्य बाधकं कालत्रयेऽपि इत्यत्र शेषमूह्यम्।

अथास्तु सामान्यादावुपचरितं द्रव्यत्वादौ मुख्यं सत्सदिति ज्ञानम्, सत्तासम्बन्धस्तु विकल्पते। किं सत्ता सताम् अथासतामिति ? यदि सताम्, अथ सत्तासम्बन्धात्पूर्वं सत्त्वम्, सत्तासम्बन्धेन विना चेति। सत्तासम्बन्धाभ्युपगमे तत्राप्ययं विकल्प इत्यनवस्था। विनेति चेत्। किं सत्तया ? अथासतां सत्तासम्बन्धात् सत्त्वमित्यपारमार्थिकं तर्हि सत्त्वम्, उपाध्यपेक्षितत्वात्। यदि चासतां सत्तासम्बन्धेन सत्त्वम्, खरविषाणादीनामपि सत्त्वं स्यादसत्त्वाविशेषात्। तथा सत्तायाश्चासत्त्वे तद्योगान्न द्रव्यादिषु सत्त्वं स्यात्। स्वरूपेण च सत्त्वे द्रव्यादिषु तथाभावप्रसङ्गः सत्तासम्बन्धेन चानवस्थेति।

अतोऽर्थक्रियाकारित्वेन सत्त्वमिति शाक्या मन्यन्ते।

वर्त्तमानकालसम्बन्धित्वेनेत्यपरे।

तत्र यत्तदवोचाम, किं सतां सत्तासम्बन्धात् सत्त्वम्? अथ असतामिति ? तदसत्। निष्पादसम्बन्धयोरेककालत्वात्[१]। तथाहि, पदार्थानां स्वकारणसत्तासम्बन्ध एवोत्पत्तिः। न पूर्वं सत्त्वम्, सत्कार्यवादप्रतिषेधात्। न चासतां स्वकारणसत्तासम्बन्धाभ्युपगमे खरविषाणादिषु तथाभावप्रसङ्गः, तदुत्पत्तिकारणाभावस्य तदभावेनैव निश्चयात्। नित्येषु पूर्वापरभावानुपपत्तेर्विकल्पानुपपत्तिः।

न च अपारमार्थिकं सत्त्वम्, सत्तासम्बन्धस्य परमार्थत्वात्। न च स्फटिकादौ चक्रादि [ ? जपादि ] रूपमिव औपाधिकं द्रव्यादिषु सत्त्वम्, सत्तायास्तत्र समवायात्। उपाधिश्चोपाधीयमानः समवेतो वा, क्वचित् समवेतरूपतिरोधायकश्च। तथाहि, स्फटिकादिरूपे रक्तादिद्रव्यसान्निध्यात् तिरोहिते रक्तः स्फटिक इति प्रत्ययस्य भावाद् युक्तमौपाधिकत्वम्। न चैवं सत्ता द्रव्यादिस्वरूपं तिरोधायात्मानं प्रकाशयति, द्रव्यत्वादेरपि प्रतिभासनात्। नाप्यसमवेता, तत्र समवायोपलब्धेः।

नन्वेवं द्रव्यत्वादेर्व्यतिरेके तर्हि स्वरूपासम्भवाद् द्रव्यादेरप्यदृश्यताप्रसङ्गः। तत्र द्रव्यत्वादेरेव द्रव्यादिष्वसाधारणत्वात्। तथाहि, द्रव्ये द्रव्यत्वेन द्रव्यमिति व्यपदेशो

---

१. निष्ठासम्बन्धयोरेककालत्वाद् इति वाक्यकृदुक्तिस्तुलनीया।

गुणादौ च गुणत्वादिनेति व्यतिरेकाविशेषेऽपि द्रव्येष्वेव द्रव्यत्वं समवेतमिति तत्रैव व्यवहारहेतुर्न गुणादौ। एवं गुणत्वादावपि नियतधर्मिसमवायित्वं नियामकमिति वाच्यम्। समवायस्तु व्यतिरेकेऽपि समवाय्याधारतयावभासत इति समवायिव्यवहार-हेतुरिति। अव्यतिरेके तु द्रव्यत्वादिस्वरूपाणामेकधर्मितादात्म्येनाभेदाद् विभिन्न-व्यवहारहेतुत्वं न स्यात्। भेदे वा धर्मिणस्तथाभावो विपर्यये तादात्म्यविरहात्।

न च द्रव्यादिज्ञानस्य कल्पनात्वमिति वाच्यम्, अर्थक्रियान्वयव्यतिरेकानु-विधायिनः कल्पनात्वेऽतिप्रसङ्गाद् इति सिद्धं द्रव्यादिषु सत्तासम्बन्धात् सत्सदिति ज्ञानम्।

अर्थक्रियाकारित्वेन सत्ताभ्युपगमे समानञ्चैतद् दूषणम्। किं सतामर्थक्रिया-कारित्वम्? अथ असतामिति? सतामर्थक्रियाकारित्वे सत्ताभ्युपगमे तथा दुरुत्तरमितरे-तराश्रयत्वम्। तथा ह्यर्थक्रियाजनकत्वेन सत्त्वम्, सतश्चार्थक्रियाजनकत्वमित्येका-प्रसिद्धावितराप्रसिद्धिरिति। अथ अर्थक्रियामन्तरेण सतोऽर्थक्रियाजनकत्वं तत्राप्ययं विकल्प इत्यनवस्था। असत एवार्थक्रियाजनकत्वे खरविषाणादिषु तथाभावः स्यात्। अर्थक्रियायाश्च अर्थक्रियान्तरेण सत्त्वेऽनवस्था। अथ स्वरूपेणेति चेत्, पदार्थेषु तथाभावप्रसङ्गः।

एतेन वर्त्तमानकालसम्बन्धित्वेन सत्त्वं प्रत्युक्तम्।

अथ अर्थक्रियासामर्थ्यं सत्त्वम्। तस्यानेकपदार्थव्यापित्वेन सत्सदितिज्ञान-जनकत्वे संज्ञाभेदमात्रम्। अव्यापित्वे त्वनुगतज्ञानजनकत्वं न स्यात्। तथा अर्थक्रिया-जनकत्वे अर्थक्रियासमर्थ इति व्यवहारो न सत्सदिति, विलक्षणत्वादित्यलम्।

अतः स्थितमेतद् द्रव्यादीनां सत्तासम्बन्ध इति।

तथा सामान्यमेव द्रव्यव्यावृत्तिहेतुत्वाद् विशेषो द्रव्यत्वादिः, स विद्यते येषां तानि सामान्यविशेषवन्ति, तेषां भावः सामान्यविशेषवत्त्वम्। समवेतः सामान्य-विशेषस्तदुपलक्षितो वा समवायः। तेन सता सामान्यविशेषवद् द्रव्यमित्यादि व्यवहारदर्शनात्।

तथा स्वसमये स्वशास्त्रे अर्थशब्देनाभिधीयन्त इति स्वसमयार्थशब्दाभिधेयानि, तेषां भावः * स्वसमयार्थशब्दाभिधेयत्वम् * वाच्यवाचकालम्बनं ज्ञानमेव साधर्म्यम्। अर्थ-संज्ञाकरणे च प्रयोजनं श्रोत्रग्राह्योऽर्थः शब्द इति (वै. सू. २।२।२१)। तथाहि, श्रोत्रग्राह्यत्वा-

च्छब्द इत्युक्ते शब्दत्वादिभिर्व्यभिचारः, तन्निरासायार्थग्रहणम्। अर्थस्तु द्रव्यगुणकर्मात्मापि भवति। न च श्रोत्रग्राह्य इत्येतत्समुदितं शब्दस्य लक्षणम्।

तथा धर्माधर्मौ कुर्वन्तीति धर्माधर्मकर्तॄणि तेषां भावो धर्माधर्मकर्तृत्वम्। तच्च द्रव्यादीनामात्मीयं रूपं सहकारिविशेषश्च। तथा च द्रव्यमात्मा धर्माधर्मयोः समवायिकारणम्। सुवर्णादिद्रव्यञ्च दानापहरणाभ्यां निमित्तकारणमिति। तथात्मान्तःकरणसंयोगोऽसमवायिकारणम्। शुद्धाभिसन्धिर्दुष्टाभिसन्धिश्च निमित्तकारणम्। एवं गीतिविशेषो नृत्तविशेषश्च यथासम्भवं निमित्तमिति। शेषमूह्यम्। ननु सुवर्णादिद्रव्यवज्जातिरप्यदृष्टकारणम्। अस्तु वा उपलक्षणेन चरितार्थत्वात्।

## कार्यत्वानित्यत्वे कारणवतामेव।

कार्यत्वञ्चानित्यत्वञ्च कार्यत्वानित्यत्वे, द्रव्यादीनां त्रयाणामपि। यदि नाम कारणं विद्यते येषां तानि कारणवन्ति तेषामेव, पूर्वधर्मस्तु सर्वेषामिति लभ्यते। सापवादत्वाविशेषेऽपि कारणवत्त्वपदेनासमासकरणमनयोः साहचर्यज्ञापनार्थम्।

यद् वा कारणवतामकारणवताञ्च कारणवतामित्यसमासकरणम्।

## कार्यत्वपदार्थविचारः

अथ किमिदं कार्यत्वं नामेति? स्वकारणसत्तासम्बन्धः, तेन सता कार्यमिति व्यवहारात्।

अभूत्वा भवनमित्येके। अत्राप्यभूत्वा पश्चाद् भवनं स्वकारणैः सत्तया च सम्बन्ध एवेति।

## अनित्यत्वपदार्थविचारः

अनित्यत्वन्तु प्रागभावप्रध्वंसाभावोपलक्षिता वस्तुसत्ता। अथ वस्तुसत्ताकाले प्रागभावप्रध्वंसाभावयोरभावात् कथमुपलक्षणत्वम्? न च अनित्यव्यवहारे सत्ता विशेषणम्, विलक्षणत्वात्। तथाहि, सत्ताविशेषणं सत्सदिति ज्ञानमेव, ज्ञानान्तरे तु सत्ताया विशेषणत्वे सर्वत्र सत्तैव विशेषणं स्यादित्यतिप्रसङ्गः।

तस्माद् यद् भूत्वा न भवति, आत्मानं जहाति, तदनित्यमिति केचित्। तदप्यसत्। विनाशस्य वस्तुकालेऽसम्भवित्वेन विशेषणत्वायोगात्। अथाविद्यमानोऽपि विनाशो-

नुमीयमानो भवत्युपलक्षणमिति चेत्, तथापि विनष्ट इति स्यात्, न अनित्यमिति ? न । पर्यायत्वात् । तथाहि, अनित्या विषया विनाशिन इति व्यवहारः । यदि च अनित्यज्ञानेऽन्यन्निमित्तं न स्यात् प्रतिपद्येमह्युभयान्तोपलक्षिता सत्ता विशेषणमिति । यथा अनुत्पत्तिविनाशयोरविद्यमानयोरपि कयाचिद् भङ्ग्या सत्तोपलक्षणत्वम्, तथा वस्तूपलक्षणतायामपि न किञ्चिद् बाधकमस्तीति । तथाहि, प्रागभावः स्मर्यमाणः प्रध्वसाभावश्चानुमीयमानो वस्तूपलक्षणमिति ।

अथ विनाशानुत्पत्तिरनुत्पत्तिविनाशश्च विद्यमानत्वात् सत्ताविशेषणमिति चेत्, परमार्थस्य विशेषणत्वं तयोः कल्प्यतां किमतिप्रयासेन । अथानित्यज्ञानमभावानुरक्तं न भवतीति विशिष्टसत्ता विशेषणमुपकल्प्यते ? न । सत्तानुरागस्यानुपलब्धेः । केवलमनित्यत्वानुरक्तमनित्यमिति ज्ञानमुत्पद्यते ।

अनित्यत्वन्तु प्रागभावप्रध्वंसाभावोपलक्षिता वस्तुनः सत्तेति उद्योतकरकल्पनायां ( न्या० वा० २।२।१३ ) कल्पनागौरवं स्यादिति । प्रध्वंस एवानित्यत्वमितीष्टं भाष्यकारेणेति ।

**प्रकृतेषु परिगणितानां न समवाय्यसमवायित्वम्**

**कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्यः ।**

तथा कारणानां भावः कारणत्वम् । कारणत्वञ्च समवाय्यसमवायिकारणत्वम्, समवायिनोऽसमवायिनश्चात्मीयं स्वरूपम्, न निमित्तकारणत्वं सामान्यादिष्वपि भावात् । तच्च प्रतिनियतमप्यविवक्षितविशेषं साधर्म्यम् ! तत् किं सर्वेषामित्यत आह * अन्यत्र पारिमाण्डल्यादिभ्यः * इति । पारिमाण्डल्यादीनि वर्जयित्वा । परिमण्डलाः परमाणवः, तेषां भावः पारिमाण्डल्यम्, परमाणुपरिमाणम् । तच्च द्व्यणुकाणुपरिमाणोत्पत्तावकारणमिति वक्ष्यामः परिमाणावसरे । आदिपदेन आकाशादिविभुद्रव्यम्, अन्त्यः शब्दः, परत्वापरत्वपृथक्त्वाद्यकारणमिति ।

**प्रकृतेषु नित्यद्रव्यातिरिक्तानांसाधर्म्यम्**

**द्रव्याश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्यः ।**

न च परं पूर्वसाधर्म्यम् । द्रव्याश्रितानां भावो द्रव्याश्रितत्वम् । तच्चान्यत्र नित्यद्रव्येभ्यस्तेषामाश्रयाभावात् । यद्यपि षण्णामाश्रितत्वाभिधानेन द्रव्यादीनामा-

श्रितत्वमुक्तं तथापि द्रव्योपलक्षितस्येहाभिधानादपुनरुक्तमिति ।

सामान्यादित्रितयसाधर्म्यम्

**सामान्यादीनां त्रयाणां स्वात्मसत्त्वम्, बुद्धिलक्षणत्वम्, अकार्यत्वम्, अकारणत्वम्, असामान्यविशेषवत्त्वम्, नित्यत्वम्, अर्थशब्दाभिधेयत्वञ्चेति ।**

इदानीं सामान्यादीनां नैकस्य द्वयोर्वा किं तर्हि ? त्रयाणामपि साधर्म्यम् । स्वात्मना साधारणधर्मेणोपचारनिमित्तेन सत्त्वं सत्सदिति प्रत्ययजनकत्वम्, मुख्ये ह्यनवस्थादिबाधकोपपत्तेः ।

अन्ये तु स्वात्मसत्त्वं सत्तानधिकरणानां सत्सदितिप्रत्ययजनकत्वमिति ब्रुवते । अत्र हि निमित्तानभिधाने सतां भावः सत्त्वमिति न किञ्चिदुक्तं स्यात् ।

अथ सत्तानधिकरणानां स्वात्मना निमित्तेन सत्सदिति प्रत्ययजनकत्वम् । तर्हि तस्यानुवृत्तिरूपतायां दोषोपपत्तेः, व्यावृत्त [रूप] तायाश्च अनुगतज्ञानजनकत्वं न स्याद् इत्युपचारनिमित्तत्वमेव न्याय्यम् ।

नन्वेवं सामान्यादिषूपचरितं सत्त्वं स्यात् ? इष्यत एव सत्त्वं सत्सदितिज्ञानजनकत्वमुपचरितम् ।

अथ उपचरितसत्त्वाभ्युपगमे परमार्थतोऽसत्त्वम् ? तदिष्टमेव । न परमार्थतः सामान्यादौ सत्सदितिज्ञानम् उपचाराभ्युपगमात् ।

अथ सत्तानधिकरणत्वे सामान्यादेरभावः स्यात्, तदसत् । असाधारणधर्माधिकरणतया प्रमाणसिद्धस्याभावाभ्युपगमे द्रव्यादिषु तथाभावः स्यात् । अतः सामान्यादावुक्तरूपे स्वरूपसत्त्वे न दोष इति ।

तथा बुद्धिर्लक्षणं येषां बुद्धया लक्ष्यन्त इति वा बुद्धिलक्षणास्तेषां भावो बुद्धिलक्षणत्वम् । सामान्यशब्देनाप्यर्थादनुगतव्यावृत्तेहबुद्धयन्यतमबुद्धिलक्षणत्वं विवक्षितमिति विज्ञातम् । अनुगता हि बुद्धिर्न विशेषे नापि समवाये, व्यावृत्ता च न सामान्यसमवाययोः, तथेहबुद्धिर्न सामान्यविशेषेष्विति । व्यावृत्तत्वाद् वैधर्म्यं स्यादित्यन्यतमग्रहणम् । तच्च सर्वेषु समानत्वादेव साधर्म्यम् ।

यद् वा बुद्धिर्विशेषणान्तरोपचरिता लक्षणम् इतरस्माद् भेदकम्। तच्चाविवक्षितविशेषं साधर्म्यम्। तथाहि, द्रव्यगुणकर्मस्वनुगतसामान्यवशादनुगतज्ञानजनकत्वम्, सामान्ये तु स्वरूपतयैव तथात्यन्तव्यावृत्त्या विशेषेष्वेव। अयुतसिद्धेष्वबाध्यमानेहबुद्धिः समवाय एवेति, व्यावृत्तावपि बुद्धिवेद्यत्वं समानत्वात् साधर्म्यम्।

एवं कार्याणां भावः कार्यत्वं तदभावोऽकार्यत्वं[१] स्वकारणसत्तासम्बन्धाभावः।

तथा कारणानां भावः कारणत्वं तदभावोऽकारणत्वं[२] समवाय्यसमवायिकारणत्वाभावः। निमित्तकारणत्वञ्च ज्ञानोत्पत्ताविष्यत एव।

तथा न सामान्यविशेषवत्त्वमसामान्यविशेषवत्त्वम् अपरसामान्याभावः। न तदुपलक्षितः समवायः, समवाये तदभावप्रसङ्गात्।

## सकलाश्रयविनाशेऽपि सामान्यसमवाययोर्न विनाशः

नित्यानां भावो नित्यत्वमविनाशित्वम्, उभयान्तोपलक्षितसत्तासम्बन्धाभावो वा। तथाहि कार्यवस्तुनो विनाशित्वं दृष्टम्, सामान्यादेश्चाकार्यत्वादविनाशः। न चाश्रयविनाशाद् विनाशः, तस्यैकाश्रयविनाशेऽप्याश्रयान्तरे स्वानुरक्तप्रत्ययजनकत्वात्। तथा ह्येकाश्रयविनाशेऽप्याश्रयान्तरे सत्ता सत्सदितिज्ञानहेतुः। समवायश्चेहप्रत्ययहेतुरिति। अनयोराश्रयविनाशान्न विनाशः।

अनित्याश्रयं सामान्यं समस्ताश्रयविनाशेन निराधारस्याभावाद् विनंक्ष्यतीति? नैतदेवम्, अकार्यवस्तुत्वेन अविनाशित्वसिद्धेः समस्ताश्रयविनाशेऽप्यवस्थानमिष्यते। अत एव केवलमाश्रयाभावाद् गोत्वादिरूपतया न व्यपदिश्यत इति। अकार्यवस्तुनश्च विनाशे गगनादीनामप्युच्छेदप्रसङ्गः।

अथानित्याश्रयस्याश्रयोत्पत्त्यनन्तरं रूपादिवदुपलम्भाद् असिद्धमकार्यत्वमिति चेत्, न। उपलम्भस्योभयथाभावात्।

न ज्ञायते किं वस्तूत्पत्त्यनन्तरमुत्पद्यते? अथ अभिव्यज्यत इति? उत्पादे बाधकोपपत्तेरभिव्यज्यत इतीष्यते। तथाहि, द्रव्यस्यैव समवायिकारणत्वविधानेन गुणकर्मणोस्तत्प्रतिषेधात् तदाधारस्योत्पत्त्यभावः। तद्यथा सामान्याधारस्य युगपदुत्पत्ति

१. 'एवं कार्याणामभावोऽकार्यत्वम्' इति पाठो मातृकायाम्।
२. 'कारणानामभावोऽकारणत्वम्' इति पाठो मातृकायाम्।

विना समवायिकारणाभावाच्चेति । तथाहि, यत्र समवेतं कार्यं तदवश्यं समवायिकारणम्, सामान्यस्य क्रमभाविषु स्वाधारेषु सर्वेषु समवायोपलब्धेः सर्वं समवायिकारणमिति । सकलाधारनिष्पत्तावेवोत्पत्तिरिति पूर्वभाविषूपलम्भो न स्यात् ।

अथ सर्गादौ भूयसां स्वाधाराणामुत्पादादुत्पन्नं सामान्यं क्रमभाविष्वाधारेषु समवेष्यतीति चेत्, न । कार्यान्तरेष्वदर्शनात् । नहि रूपादिकार्यं स्वाधारेषु समवेतमुपजातमन्येन समवायवृत्त्या सम्बध्यमानं दृष्टमिति । न च क्रमेणोत्पद्यमानेष्वन्यत् सामान्यमिति वाच्यम् भेदे प्रमाणाभावात् । अभेदे त्वनुगतं ज्ञानमेव प्रमाणमिति वक्ष्यामः सामान्यपरीक्षायाम् ।

तदेवम् उत्पत्तिपक्षे बाधकोपपत्तेर्वस्तूत्पत्त्यनन्तरं समभिव्यज्यत इत्यकार्यत्वान्नित्यत्वं सिद्धम् ।

एवमर्थशब्दानभिधेयत्वञ्च स्वसमयार्थशब्दाभिधेयत्वाभाव इति । यद्यपि द्रव्यादेरेव कार्यत्वादिविधानाद् इहाकार्यत्वादिर्लभ्यते तथापि साधर्म्यस्य विवक्षितत्वादभिधानमिति । सामान्यादीनां कार्यत्वाद्यभावोऽपि साधर्म्यमिति ।

**नवद्रव्यसाधर्म्यम्**

## पृथिव्यादीनां नवानामपि द्रव्यत्वयोगः, स्वात्मन्यारम्भकत्वम्, गुणवत्त्वम्, कार्यकारणाविरोधित्वम् ।

एवं पदार्थानां साधर्म्यमभिधाय द्रव्याणां साधर्म्यनिरूपणार्थमाह *पृथिव्यादीनाम्* इत्यादि । पृथिवी आदिर्येषां तानि पृथिव्यादीनि तेषाम् । न ज्ञायते कियतामतः * नवानामपि द्रव्यत्वयोगः * साधर्म्यम् । द्रव्यत्वेन योगो द्रव्यत्वोपलक्षितः समवाय इति । यद्यपि समवायः पञ्चपदार्थवृत्तिस्तथापि द्रव्यत्वेनोपलक्षितोऽसाधारणत्वाद् भवत्येव लक्षणमिति ।

न च द्रव्याणां भावो द्रव्यत्वमित्युक्तेऽर्थादवगम्यते योग इति वाच्यम् । गम्यवृत्त्याश्रयणेन शब्दवृत्तिप्रतिषेधेऽतिप्रसङ्गात् ।

न चोपचरितभेदत्वादवास्तवं लक्षणमिति दूषणम्, श्रोत्रस्येव विशिष्टार्थक्रियाजनकत्वात् ।

नापि [ अ ] समर्थविशेषणता। योगपदं विना हि असम्भवित्वाशङ्कानतिवृत्तेरिति। शेषं लक्षणदूषणस्य प्रतिसमाधानं वक्ष्यामः पृथिव्यधिकारे।

लक्षणञ्च भेदार्थं व्यवहारार्थञ्चेति। तथाहि, पृथिव्यादीनीतरस्माद् भिद्यन्ते, द्रव्याणीति वा व्यवहर्त्तव्यानि द्रव्यत्वयोगात्, ये तु न भिद्यन्ते नापि द्रव्याणीति व्यवह्रियन्ते न ते द्रव्यत्वयुक्ता यथा रूपादयः, न च तथा न द्रव्यत्वयुक्तानि पृथिव्यादीनीति, तस्मादितरस्माद् भिद्यन्ते द्रव्याणीति वा व्यवहर्त्तव्यानीति।

एवं द्रव्यशब्दस्य प्रवृत्तौ पृथिव्यादीनां नवानामपि द्रव्यत्वयोगो निमित्तमिति शब्दार्थनिरूपणपरत्वेनापि सम्बध्यते वाक्यम्। तथा च न सामान्यवतः शब्दार्थत्वे किञ्चिद् बाधकमस्तीति वक्ष्यामः।

तथा अतीन्द्रियशक्तिप्रतिषेधार्थश्च। तत्तु पृथिव्यादीनां नवानामपि द्रव्यत्वयोगो निजा शक्तिरिति।

## द्रव्यत्वस्य सामान्यत्वविचारः

अथ अकृतसमयस्य गोपिण्डेष्विवानुगताकारज्ञानस्यानुपपत्तेर्न द्रव्यत्वं सामान्यमस्तीति। यथा हि नारिकेलद्वीपवासिनो गोपिण्डोपलम्भादेकाकारता प्रतिभासने नैवं पृथिव्यादिषूपलभ्यमानेष्विति। अथास्ति कृतसमयस्य द्रव्यं द्रव्यमिति ज्ञानम्। तच्च सङ्केतवशादेव भविष्यतीति।

तदसत्। सामान्यस्य नियतव्यञ्जकव्यङ्ग्यतया व्यञ्जकानुपलब्धावप्यनुपलब्धेरभावात्। तथाहि, द्रव्यत्वं क्रियावत्त्वादिधर्मोपलम्भादभिव्यज्यते, अतिशयद्रव्याश्रितत्वोपलब्धेर्गुणत्वमेवं कर्मलक्षणोपलब्धेः कर्मत्वमिति। शेषेष्वपि चिन्त्यम्, व्यञ्जकमप्यूह्यम्।

न च सर्वेषां व्यञ्जकोपलब्धिर्विद्यत इति सामान्यानुपलम्भो विघातक एव। कृतसमयस्य व्यञ्जकोपलब्धेर्भवत्येव द्रव्यादिष्वनुगतज्ञानम्। सास्नादिना वा कृतसमयेनापि संवेद्यत इति युक्तं गवादिष्वनुगताकारविज्ञानमिति।

यत्र च द्रव्यगुणकर्मात्मकं निमित्तं न सम्भाव्यतेऽबाधितानुगतायां संविदि तत्र सामान्यमेव निमित्तम्। न च द्रव्यादिष्वनुगतसवेदनेऽभाव इव किञ्चिद् बाधकमस्तीति। तथाहि, अभावोऽभाव इत्यनुगतसंवेदनं द्रव्यगुणकर्मनिमित्तमपि न सामान्याद्

भवति, सामान्यस्याभावेन समवायाभावात्। समवेतञ्च सामान्यं विशेषणमुपलब्धम्।

अथेदमेवाभावत्वानुरक्तमभावोऽभात्र इति ज्ञानमभावत्वस्याभावेन समवायं दर्शयतीति चेत्, न। अनेकान्तात्। तथाहि, सामान्यादौ सत्सदिति ज्ञानं विना सत्तासमवायमित्युक्तपूर्वम्। सामान्यवत्त्वे चाभावस्य भावरूपतैव स्यात्। एवञ्च अनुत्पत्तेरनादित्वान्नित्यत्व विनाशस्य च आदिमत्वादनित्यत्वं प्रसज्येत। प्रागभावस्य च नित्यत्वेन वस्तूपलम्भो न स्यात्। तयोः स्वरूपपरिहारस्थितिविरोधात्।

न च अभावोपमर्दात्मनो भावस्योत्पत्तिर्युक्तेति प्रागिति विशेषणासम्भवः। प्रध्वंसानुत्पत्तिश्च, तस्य हि उत्पत्तिमदपेक्षितत्वात्। सम्भवेऽपि उत्पत्तिमत्त्वेन विनाशस्य विनाशे भावग्रहणं स्यात्। यथा हि विनाशानुत्पत्तेः पूर्वं भावो गृह्यते तद्वद् विनाशापायेऽपि गृह्येत, विरोधाभावस्याविशेषात्। न चैतद् दृष्टमतः सामान्यवद् व्यतिरेकः।

न चोपाधिं विना अभावोऽभाव इति ज्ञानं शक्यं भवितुम्। किन्तर्हि ? घटाभावः पटाभाव इति ज्ञानोत्पत्तेर्वैलक्षण्यमेव। अथास्ति घटाभावो घटाभाव इत्यनुगतज्ञानमिति चेदत्राप्युपाधिवशादुपलक्षणत्वम्, सामान्यमेव ज्ञानहेतुरिति द्रष्टव्यं मुख्ये बाधकोपपत्तेः। न चैवं द्रव्यं द्रव्यमिति ज्ञाने किञ्चिद् बाधकमस्तीति सामान्यसिद्धेर्नासम्भवीदं लक्षणमिति।

एवं स्वश्चासावात्मा चेति स्वात्मा, तस्मिन्नारम्भकत्वम्, स्वात्मसमवेतकार्यजनकत्वम्, समवायिकारणत्वमिति यावत्। तच्च पृथिव्यादिष्वेव भावादितरस्माद् भेदकम्। तथाहि, कार्यसमवायो नर्ते पृथिव्यादिभ्यः सम्भवतीति।

तथा गुणा विद्यन्ते येषां ते गुणवन्तस्तेषां भावो गुणवत्त्वं गुणोपलक्षितः समवायः, समवेता वा गुणाः। तेऽप्यसाधारणत्वाद् भेदकाः। यथा न गुणादिषु गुणवत्त्वं तथा वक्ष्यामो गुणसङ्करे [ ावसरे ]।

तथा कार्यकारणयोरविरोधः कार्यकारणाविरोधः, स विद्यते येषां ते कार्यकारणाविरोधिनः, तेषां भावो कार्यकारणाविरोधित्वम्। कार्यकारणयोः परस्पराविरोधित्वमेक एव धर्मः।

यदि वा धर्मद्वयं कार्याविरोधित्वं कारणाविरोधित्वञ्चेति [तदा] कार्येण न विरुध्यन्ते न विनाश्यन्ते इति कार्याविरोधिनस्तेषां भावः कार्याविरोधित्वं कार्येण विनाशाभावः। स च सर्वेषु पृथिव्यादिष्वस्तीति साधर्म्यम् न पुनर्लक्षणं विपक्षैकदेशेऽपि

भावात्। तथाहि, कार्येण विरुध्यन्ते शब्दबुद्ध्यादयो न सर्वे गुणाः, तथा कर्माण्यपि कार्येण विरुध्यन्ते, न कार्येणैव आश्रयविनाशेऽपि विनाशात्।

न च पदार्थापेक्षयापि लक्षणविवक्षायां विपक्षैकदेशे वर्त्तमानस्य गमकत्वम्। तथा कारणाविरोधित्वं यदि कारणेन न विरुध्यन्ते इति कारणाविरोधिनस्तेषां भावः कारणाविरोधित्वम्, कारणेन विनाशाभावः। स च आकाशादिष्वस्ति कारणाभावादिति पक्षे व्यापकस्यापि सतो न विपक्षाद् व्यावृत्तिरित्यलक्षणत्वम्। तथाहि, न कारणेन गुणा विनाश्यन्ते नापि कर्मेति।

अथ कारणं न विरुन्धन्ति न विनाशयन्तीति कारणाविरोधिनस्तेषां भावः कारणाविरोधित्वं कारणाविनाशकत्वं कार्यधर्म इति। अत्र नित्यद्रव्येषु कारणाभावात् कारणाविरोधित्वं कारणाविनाशकत्वं चिन्तनीयमिति। विपक्षैकदेशे वर्त्तमानस्यागमकत्वमेव। तथाहि, शब्दबुद्ध्यादेर्यद्यपि कारणविनाशकत्वं तथापि न रूपादीनामस्तीत्यतिव्याप्तिः। एवं कर्मापि न कारणं विनाशयतीति।

न च कार्याविरोधित्वेनाविशेषस्तत्र हि कार्येणाविनाशत्वं कारणधर्मः, कारणाविरोधित्वं कारणाविनाशकत्वं कार्यधर्म इत्यपुनरुक्तम्। तदेवमुभयथापि विपक्षैकदेशाव्यावृत्तः साधर्म्यमेव न तल्लक्षणमिति सिद्धम्।

## अन्त्यविशेषवत्त्वम् अनाश्रितत्वनित्यत्वे च अन्यत्रावयविद्रव्येभ्यः।

एवमन्त्या विशेषा विद्यन्ते येषां ते तद्वन्तः, तेषां भावोऽन्त्यविशेषवत्त्वम्, अन्त्यविशेषोपलक्षितः समवायः समवेता वा अन्त्यविशेषाः।

तथा अनाश्रितत्वञ्च नित्यत्वञ्चेत्यनाश्रितत्वनित्यत्वे। अनाश्रितत्वमाश्रितत्वाभावः, नित्यत्वमविनाशित्वम्, उभयान्तानुपलक्षिता वस्तुसत्ता वा।

किमेतद्धर्मत्रयं सर्वेषु पृथिव्यादिष्वस्ति व्यापकञ्चेत्याह *अन्यत्रावयविद्रव्येभ्यः* इति। अवयविद्रव्याणि वर्जयित्वा नित्यद्रव्येष्वेवेति।

ननु धर्मत्रयस्य सापवादत्वाविशेषेऽप्यन्त्यविशेषवत्त्वेनासमासकरणे किं प्रयोजनमिति। अन्त्यविशेषाणामव्यापकत्वेऽसाधारणताज्ञानेनैव। अनाश्रितत्वनित्यत्वयोश्चान्यत्रापि सद्भावात् साधारणत्वेनासमासकरणम्। तथाहि, नित्यत्वं गुणादिष्वप्य-

स्तीति साधारणम्, अनाश्रितत्वं समवायस्यापि मुख्यवृत्तौ बाधकोपपत्तेर्गौणवृत्त्याश्रयणेन सम्भाव्यते, न परमार्थत इति साधारणम् ।

द्रव्यषट्कसाधर्म्यम्

**पृथिव्युदकज्वलनपवनात्ममनसामनेकत्वापरजातिमत्त्वे ।**

एव पृथिव्यादीनां नवानां पदार्थान्तराद् व्यावृत्तं साधर्म्यमभिधाय पुनस्तेषां स्वभेदाद् व्यावृत्तं साधर्म्यं दर्शयति * पृथिव्युदकज्वलनपवनात्ममनसाम् * इति । चार्थे द्वन्द्वः समासः । अनेकत्वञ्चापरजातिमत्त्वञ्चेत्यनेकत्वापरजातिमत्त्वे ।

अनेकत्वञ्च क्षित्यादेर्विशेषलक्षणयोगिनो व्यक्तिभेदः, अनेकत्वसंख्या वा । नाकाशादेर्व्यक्तिभेदो नानेकत्वसंख्या वा सम्भवतीति तस्माद् व्यावृत्तिरिति ।

अनेकत्वादेवापरजातिमत्त्वम् । अपरजातिर्द्रव्यत्वापेक्षया पृथिवीत्वादिरूपा । सा विद्यते येषा तानि तद्वन्ति, तेषां भावोऽपरजातिमत्त्वम्, अपरजात्युपलक्षितः समवायः, समवेता वा अपरजातिरिति ।

द्रव्यपञ्चकसाधर्म्यम्

**क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्त्तत्वपरत्वापरत्ववेगवत्त्वानि ।**

एवं * क्षितिजलज्योतिरनिलमनसाम् * साधर्म्यं क्रियावत्त्वञ्च मूर्त्तत्वञ्च परत्वञ्चापरत्वञ्च वेगवत्त्वञ्चेति तथोक्तानि । तथा च क्रिया चलनरूपा, सा विद्यते येषां तानि तद्वन्ति, तेषां भावः क्रियावत्त्वम्, समवेता क्रिया, तत्समवायो वा । तथा मूर्त्तिरव्यापि द्रव्यपरिमाणम्, सा विद्यते येषां तानि मूर्त्तानि, तेषां भावो मूर्त्तत्वम् । समवेता मूर्त्तिस्तत्समवायो वा । मूर्त्तत्वादेव च परत्वापरत्वादिसद्भावः क्रियावत्त्वञ्चेति । परापराणां भावः परत्वापरत्वे यत्सद्भावे क्षित्यादिषु परापरव्यवहार इति, समवेतौ परत्वापरत्वगुणौ, तत्समवायो वा । वेगो विद्यते येषां तानि वेगवन्ति, तेषां भावो वेगवत्त्वम्, समवेतो वेगगुणस्तत्समवायो वा । एतानि च क्षित्यादिष्वेवेति नियम्यन्ते, न तु सर्वदा तेषु भवन्तीति ।

द्रव्यचतुष्टयसाधर्म्यम्

**आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वञ्च ।**

एवम् * आकाशकालदिगात्मनाम् * सर्वगतत्वादि साधर्म्यम् । सर्वशब्दश्चानन्तरोक्तमूर्तेष्वेव वर्त्तते । सर्वेषु गताः सर्वगताः सर्वप्राप्ताः, तेषां भावः सर्वगतत्वम् । सर्वमूर्तै

सयोगः। स चान्यतरकर्मजः संयोगजो वा। स तूभयनिष्ठत्वाविशेषेऽप्याकाशादेरेव साधर्म्यम्। तस्य हि सर्वमूर्तैः सह संयोगो न मूर्तानामन्यतमस्येति।

तथा परममहतां भावः परममहत्त्वम्। निरतिशयपरिमाणं तत्समवायो वा।

तथा सर्वसंयोगिसमानदेशत्वं सर्वाणि च तानि संयोगीनि च मूर्तद्रव्याणि, तैः समानाः संयोगास्तेषामाकाशादयो देशा आधारास्तेषां भावः सर्वसंयोगिसमानदेशत्वं सर्वसंयोगिसंयोगाधारत्वम्।

न च संयोगस्योभयनिष्ठत्वान्मूर्त्तानामप्येष धर्म इति वाच्यम्। यथा ह्येकमाकाशं सर्वमूर्तसंयोगाधारो नैवमेकं मूर्तमित्यर्थाद् विशेषो लभ्यते। न च सर्वगतत्वेनाविशेषः। सर्वगतत्वं हि सर्वसंयोगस्तदुपलक्षितो वा समवायः, सर्वसंयोगिसंयोगाधारत्वमिति।

यद् वा सर्वे च ते, सयोगो विद्यते ये षां ते संयोगिनस्ते च सर्वसंयोगिनो घटादयः शरावादयश्च, तेषां समानाः संयोगा इति। शेषं पूर्ववत्।

अन्ये तूपचारेणैव व्युत्पत्त्या वा, संयोगिशब्देन संयोग एवोच्यते इति मन्यन्ते। संयुज्यन्त इति संयोगास्ते विद्यन्ते येषां ते संयोगिनः संयोगा एव, स्थानादुपचारो वेति। सर्वसंयोगिनान्तु समानाश्च ते देशाश्चेत्येकत्वे सत्याधार इति।

अत्र चैकत्वे सतीति विशेषणं शब्दवृत्त्या लभ्यत इति सामर्थ्याश्रवणमपास्तं भवति। तच्चासत्। इन्द्रियसामान्यलक्षणे विशेषगुणलक्षणादौ च तस्यैव समाश्रयणादिह प्रयासमात्रमेवेति।

**पृथिव्यादिपञ्चकसाधर्म्यम्**

**पृथिव्यादीनां पञ्चानामपि भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानि।**

तथा पृथिव्यादीनां साधर्म्यमाह [ * पृथिव्यादीनाम् * ]। पृथिव्यादिर्येषां तानि पृथिव्यादीनि, तेषाम्। न ज्ञायते कियतामतः * पञ्चानामपि * साधर्म्यम् भूतत्वञ्च इन्द्रियप्रकृतित्वञ्च बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वञ्चेति तथोक्तानि।

भूतानां भावो भूतत्वं तच्च सामान्यमेव। तथाहि, द्रव्यगुणकर्मणि निमित्ते चाबाध्यमानमनुगतज्ञानं सामान्याद् भवद् दृष्टम्, यथा गौरित्यादि ज्ञानम्। अस्ति च भूतं तमित्यादि क्षित्यादिषु ज्ञानमतः सामान्याद् भवतीति। न चास्य सामान्या-

दावनुगतज्ञानस्यैव किञ्चिद् बाधकमस्ति । तथा च सामान्ये सामान्यकल्पनायामनवस्था स्यादिति । सामान्यं द्रव्यत्वं सामान्यं गुणत्वमिति ज्ञानं सामान्यं विना भवतीत्युक्तम्, न च [ तत् ] भूतं भूतमिति ज्ञाने बाधकमस्ति ।

अथ नारिकेलद्वीपवासिनां कस्मादेकाकारताप्रतिभासो न भवतीति ? व्यञ्जकानुपलब्धेः । यथा हि गुणत्वादिसामान्यं नारिकेलद्वीपवासिनां व्यञ्जकानुपलम्भाद् विद्यमानमपि नोपलभ्यते तथा भूतत्वमपीति । किमस्य तर्हि व्यञ्जकमिति ? ब्राह्मणत्वस्येवोपदेशः । यथा हि ब्राह्मणत्वमुपदेशाद् विज्ञायते तद्वद् भूतत्वमपीति ।

अथोपदेश एवास्त्वलं सामान्यकल्पनया । यथा अन्यैरुक्तं "भूतत्वं भूतशब्दस्य वाच्यत्वमित्यभिधानाभिधेयनियमनियोगप्रतिपत्तिः, सा च शब्दाद् वृद्धव्यवहाराद् वा अन्वयव्यतिरेकाभ्यां भवतीति ।" (?)

एतच्चासत् । अबाध्यमानानुगतज्ञानस्य निमित्तान्तरकल्पनायां द्रव्यत्वादेरप्यसत्त्वं स्यात् । अस्ति च कृतसमयस्य भूतं भूतमिति ज्ञानं ब्राह्मणो ब्राह्मण इतिवत्, द्रव्यं द्रव्यमिति ज्ञानवच्च । ततोऽस्ति भूतत्वं सामान्यमिति ।

अथ यथा द्रव्येष्वसाधारणः समवायिकारणत्वादिर्व्यापको धर्मः कृतसमयस्य द्रव्यत्वाभिव्यञ्जकोऽस्ति, नैवं भूतेष्विति चेत्, न । इन्द्रियप्रकृतित्वादेरसाधारणत्वात् ।

अथ तदुपलम्भेऽप्यकृतसमयस्य नानुगतं ज्ञानमिति चेत्, द्रव्यत्वादिष्वपि समानम् । तत्रापि समवायिकारणत्वादेरुपलम्भेऽप्यकृतसमयस्य द्रव्यं द्रव्यमिति ज्ञानं न दृष्टमिति ।

अथ कृतसमयस्योत्पत्तेरस्ति द्रव्यत्वादि सामान्यम्, तच्च भूतत्वेऽपि समानमित्यलम् ।

तथा इन्द्रियप्रकृतीनां भाव इन्द्रियप्रकृतित्वं घ्राणरसनचक्षुस्त्वक्छ्रोत्रकारणत्वं यथासंख्यम् । तच्च वक्ष्यामः पृथिव्यधिकारे भूयस्त्वाद् गन्धवत्त्वादित्यादि ( वै० सू० ८।२।५ ) [1]सूत्रैरिति ।

---

१. अत्र सूत्रैरिति बहुवचनेन अनेकसूत्रलाभेऽपि अधुनोपलब्धेषु वै. सूत्रेषु (८।२।५) एकमेव सूत्रमुपलभ्यते इति चिन्त्यम् ।

श्रोत्रे तु कर्णशष्कुल्याकाशसंयोगोपलक्षितस्याकाशस्य कार्यत्वात् तदपेक्षया आकाशस्य कारणत्वात् । स्वभावार्थो वा प्रकृतिशब्द इति ।

नन्वाहङ्कारिकत्वादिन्द्रियाणामयुक्तमेतत् । तथा च प्रकाशकत्वं सत्त्वधर्म इति सात्त्विकादहङ्कारादिन्द्रियाणामुदयः । किमत्र प्रमाणमिति चेदप्राप्यकारित्वम् । तच्च शाखाचन्द्रमसोर्युगपद् ग्रहणाद् विज्ञातम् । अन्यथा हि शाखासम्बन्धोत्तरकालं चिरेण चन्द्रमसा च सम्बन्धाद् युगपद् ग्रहणं न स्यात्, अस्ति च, अतोऽप्राप्यकारित्वम् । तच्च भौतिकेषु न सम्भवति प्रदीपादिष्वदर्शनादित्यभौतिकत्वमन्येषामपि प्रतिपत्तव्यं चक्षुर्दृष्टान्तबलादेव ।

तथा महदणुप्रकाशकत्वाच्च । यद्धि यावत्परिमाणं तावदेव क्रियां कुर्वद् दृष्टमिति । तथा ह्यल्पपरिमाणं वास्यादि महान्तं वटवृक्षं व्याप्य च्छिदां न करोतीति दृष्टम् । किं तर्हि ? स्वव्याप्तप्रदेश एवेति । चक्षुरपि अल्पपरिमाणत्वान्न पर्वतादि-परिच्छेदकं स्यात्, तत्तु दृष्टमतो न भौतिकमिति ।

तथा नियतविषयत्वाच्च । यदि हि चक्षुस्तैजसं स्याद् रूपस्यैव तद्गुणत्वाद् ग्राहकं न द्रव्यसामान्यादेरिति । एवं शेषेष्वपि नियमेन स्वगुणग्राहकत्वप्रसङ्गः । न चैतद् दृष्टम् , अतो न भौतिकमिति ।

इतश्च न भौतिकानीन्द्रियाणि इन्द्रियत्वात्, यद् यद् इन्द्रियं तत्तदभौतिकं दृष्टं यथा मनः, तथा चेन्द्रियाणि, तस्मान्न भौतिकानीति ।

यत्तावदप्राप्यकारित्वादिति साधनं तदसिद्धम् । व्यवहितार्थानुपलब्ध्या प्राप्तेरुप-लम्भात् । अन्यथा हि व्यवहितस्याग्रहणमन्तिके च ग्रहणं न स्याद् अप्राप्तेरुभयत्राविशेषात् । आवरणानुपपत्तिश्च प्राप्तिप्रतिषेधकत्वात् , तथा च प्राप्तिप्रतिषेधं कुर्वदावरणमग्रहणाय कल्प्यते । दृष्टश्चावरणसामर्थ्यम् , दूरे वा प्रकाशकत्वमतः प्रदीपस्येव प्राप्तार्थ-परिच्छेदकत्वम् । तथा च चक्षुः प्राप्तार्थपरिच्छेदकं व्यवहिताप्रकाशकत्वात्, यद् यद् व्यवहिताप्रकाशकं तत्तत् प्राप्तावर्थपरिच्छेदकं यथा प्रदीपः, तथा व्यवहिताप्रकाशकं चक्षुः, तस्मात् प्राप्तार्थपरिच्छेदकमिति ।

प्राप्तिसद्भावे प्रमाणोपपत्तेः, शाखाचन्द्रमसोः कालभेदेन ग्रहणसद्भावेऽप्याशु-भावादुत्पलपत्रशतव्यतिभेदाभिमानवद् युगपद् ग्रहणाभिमानः ।

यच्च महदनुप्रकाशकत्वं तदप्यन्यथासिद्धत्वादसाधनम्। तथाहि, चक्षुर्वहिर्गतं बाह्यालोकसम्वन्धाद् विषयपरिमाणमुत्पद्यत इति महदाद्यर्थप्रकाशकं नाभौतिकत्वादिति।

यच्चोक्तं तैजसत्वाद्रूपस्यैव प्रकाशकं स्यादित्येतदसत्। प्रदीपे दर्शनात्। न हि प्रदोपस्तैजसत्वाद्रूपस्यैव प्रकाशको दृष्टः। किं तर्हि? रूपद्रव्यसामान्यादेरिति। एतावानेव विशेषश्च गुणः, अतस्तैजसत्वं न विरुध्यत इति। रूपादिषु मध्ये नियमेन रूपस्यैव प्रकाशकत्वं तैजसत्वेऽनुमानमिति वक्ष्यामः। नियमेन गन्धादिप्रकाशकत्वञ्च पार्थिवत्वादिषु घ्राणादेरिति।

न चैकप्रकृतिकत्वे विषयव्यवस्थोपलब्धेति नानाप्रकृतिकत्वम्। तथाहि, एकस्मात् कारणादुपजाताः प्रदीपभेदाः समानविषया इत्युपलब्धं तद्वद् इन्द्रियेष्वपि समानविषयत्वं स्यात्। दृष्टा तु घ्राणादेर्गन्धादिषु व्यवस्थेति नानाप्रकृतिकत्वम्।

तथा नानाजात्युपादानानीन्द्रियाणि, द्रव्यत्वे सति प्रतिनियतविषयत्वात्। यद् यद् द्रव्यत्वे सति प्रतिनियतविषयं तत्तद् नानाजात्युपादानं दृष्टं यथा व्यजनानिल-प्रदीपकस्तूरिकादीनीति, तथा चैतानि द्रव्यत्वे सति प्रतिनियतविषयाणि, तस्मान्नाना-जात्युपादानानीति। तथाहि, ज्ञानशब्देष्वेकजात्युपादानत्वं प्रतिनियतविषयत्वञ्चेति व्यभिचारः। तदर्थं द्रव्यत्वे सतीति विशेषणम्। न चास्य पक्षधर्मत्वादिमतोऽप्रामाण्य-मतिप्रसङ्गात्।

यच्चाभौतिकत्वेऽनुमानमिन्द्रियत्वादिति, तत्र भूतादनिवृत्तमभौतिकम्। तत्प्रतिषेधे च कारणान्तरप्रभवत्वम्, विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति साध्यविकलो दृष्टान्तः। तथा च मनसि न भौतिकत्वं नाप्यभौतिकत्वमिति।

अथ भूतादुत्पत्तिप्रतिषेधेन नित्यत्वम्, अत्राप्यभ्युपगमव्याघातः, मनस्यपि नित्यत्वाभ्युपगमात्। इन्द्रियत्वञ्चोक्तविशेषणस्यापरोक्षज्ञानजनकत्वेन भूतादुत्पत्ति-प्रतिषेधेनेत्यन्यथासिद्धम्।

निर्मूलञ्च इन्द्रियाणामहङ्कारप्रभवत्वम्, तत्सद्भावे प्रमाणासम्भवात्। तथा हि प्रधानसद्भावे सति एषा प्रक्रिया तस्य चासत्त्वं वक्ष्यमाणमिति।

 

येषाञ्च आसंसारमण्डलव्यापीनि इन्द्रियाणि तेषामशेषविषयग्रहणप्रसङ्गः। अथ अदृष्टवशान्नियतदेशे वृत्तिर्व्यज्यत इति चेत्, अत्र प्रवृत्तीनां तादात्म्ये न किञ्चिदुक्तं स्यात्। व्यतिरेके तु तदेव इन्द्रियमिति संज्ञाभेदमात्रमेव।

अथ नियतविषयावबोधान्यथानुपपत्त्या तदाकारतयैवेन्द्रियस्य परिणामो निश्चीयते? तन्न। अन्यथाप्युपलम्भात्। तथा हि नियतार्थसन्निकर्षेऽप्युपलम्भो घटत एव। न च व्यापित्वं परस्याभीप्सिततरमिति नेह प्रतन्यते। परिणामपक्षश्च न सम्भवतीति वक्ष्याम इत्यलम्।

तथा बाह्येनैकैकेन्द्रियेण गृह्यन्त इति बाह्यैकैकेन्द्रियग्राह्यास्ते च ते विशेषगुणाश्चेति, ते विद्यन्ते येषां तानि, तद्वन्ति, तेषां भावो बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वम्। समवेता हि यथोक्ता गुणास्तदुपलक्षितो वा समवायः। गुणवत्त्वं सर्वेष्वस्तीति विशेषग्रहणम्। विशेषगुणवत्त्वं स्वात्मन्यस्तीति बाह्येन्द्रियग्राह्यग्रहणम्। इन्द्रियग्राह्याश्च संख्यादयोऽपि भवन्ति न च विशेषगुणाः। तथा हि एकैकग्रहणमनर्थकं बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वस्यान्यत्राभावात्। सत्यम्, तथापि द्वितीयं साधर्म्यमित्यदोषः। तथा हि संख्यादेर्द्वीन्द्रियग्राह्यत्वादेकेन्द्रियग्राह्यग्रहणम्। एकेन्द्रियग्राह्यत्वञ्च रूपादिष्वसम्भवि स्यात्। न हि एकमिन्द्रियं सर्वेषां प्रकाशकमित्येकैकग्रहणम्। तथाप्यन्तःकरणस्य बाह्येन्द्रियाद्यधिष्ठानद्वारेण व्यापारासम्भवित्वमेवेति बाह्यग्रहणम्। एवञ्च बाह्यैकैकेन्द्रियग्राह्यगुणवत्त्वं विशेषपदत्यागेन द्वितीयं साधर्म्यमिति।

**द्रव्यचतुष्टयसाधर्म्यम्**

**चतुर्णां द्रव्यारम्भकत्वस्पर्शवत्त्वे।**

तथा चतुर्णां द्रव्यारम्भकत्वं स्पर्शवत्त्वञ्चेति * द्रव्यारम्भकत्वस्पर्शवत्त्वे *। तन्न ज्ञायते केषामिति, विशेषानभिधानात् पृथिव्यादीनामित्यनुवर्त्तनीयम् अनन्तरत्वादिति।

किं पुनर्द्रव्यारम्भकाणां भावो द्रव्यारम्भकत्वम्? द्रव्योत्पत्तौ समवायिकारणत्वं कार्यद्रव्यस्य समवायः। तेन हि सता द्रव्यं द्रव्योत्पत्तौ समवायिकारणमिति व्यवहारात्। तथाहि, द्रव्यारम्भकाणां भावो द्रव्यारम्भकत्वम्, येन सता द्रव्यमुत्पादयन्तीति न विवक्षितम्। किं तर्हि? येन सता द्रव्यमारभन्त इति, द्रव्योत्पत्तौ समवायिकारणानीति व्यवहारः। स च द्रव्यसमवायेन सता भवतीति द्रव्यारम्भकत्वं द्रव्यसमवाय एव।

अथ येन सता स्वसमवेतद्रव्यमारभन्त इति विवक्षा तत्र [? तु] यदि स्पर्शवतामेव द्रव्यारम्भकत्वदर्शनात् स्पर्श एव, तथापि स्पर्शवत्त्वेन गतार्थत्वाद् व्यर्थं स्याद् द्रव्यारम्भकत्वम् ।

अत्र एके सहकारिविशेषोपचितस्पर्शे द्रव्यारम्भकत्वम् । स्पर्शवतां भावः स्पर्शवत्त्वम्, स्पर्शोपलक्षितः समवाय इति परिहारं ब्रुवते ।

द्रव्यत्रयसाधर्म्यम्

**त्रयाणां प्रत्यक्षत्वरूपवत्त्वद्रवत्ववत्त्वानि ।**

तथा पृथिव्यादीनां त्रयाणां साधर्म्यमाह प्रत्यक्षत्वञ्च, रूपवत्त्वञ्च, द्रवत्ववत्त्वञ्चेति । तथोक्तानां प्रत्यक्षाणां भावः प्रत्यक्षत्वमपरोक्षज्ञानविषयत्वम् । तेन सता प्रत्यक्षाणीति व्यवहारात् । महत्त्वादिकारणयोगो वा । आत्मादेस्तु प्रत्यक्षतायां साधर्म्यमात्रम्, अप्रत्यक्षत्वे च व्यावृत्तमिति ।

अन्ये तु अर्थतया भावाद् द्वीन्द्रियविवक्षया प्रत्यक्षत्वमत्र विवक्षितम् । तच्च आत्मादिषु नास्तीति व्यावृत्तं साधर्म्यमिति मन्यन्ते । निर्विकल्पकसविकल्पकज्ञानविषयत्वञ्च न व्यावृत्तमात्मन्यपि भावात् । तथा च अहमिति शब्दः पृथिव्यादिशब्दव्यतिरेकादात्मनि वर्त्तत इत्युपलब्धसमयस्य तत्स्मरणाद् भवत्येव सविकल्पकज्ञानमिति ।

तथा रूपं विद्यते येषां तानि रूपवन्ति, तेषां भावो रूपवत्त्वम्, रूपसमवायः समवेतं वा रूपमिति । तच्चाविवक्षितविशेषम् । अन्यथा हि क्षित्यादिव्यावृत्तरूपाधिकरणमेवेति ।

तथा द्रवाणां भावो द्रवत्वम्, समवेतो द्रवत्वगुणस्तत्समवायो वा । अत्रापि न विशेषविवक्षा । अन्यथा क्षितितेजसोर्नैमित्तिकमपाञ्च सांसिद्धिकमिति विशेष एव स्यात् ।

द्रव्यद्वयसाधर्म्यम्

**द्वयोर्गुरुत्वं रसवत्त्वञ्चेति ।**

एवं द्वयोः पृथिव्युदकयोर्गुरुत्वं रसवत्त्वञ्च साधर्म्यम् । तथा हि गुरोर्भावो गुरुत्वम्, समवेतो गुरुत्वगुणस्तत्समवायो वा ।

तथा रसो विद्यते ययोस्ते रसवती. तयोर्भावो रसवत्त्वम्, रसोपलक्षितः समवायः, समवेतो वा रसः।

### द्रव्यषट्कसाधर्म्यम्

## भूतात्मनां वैशेषिकगुणवत्त्वम्।

एवं भूतानि चात्मानश्चेति तथोक्तास्तेषां वैशेषिकगुणवत्त्वं साधर्म्यम्। विशेषा एव वैशेषिकास्ते विद्यन्ते येषां [ गुणानाम् ] ते वैशेषिकगुणवन्तस्तेषां भावस्तत्त्वम्, तदुपलक्षितः समवायस्ते वा समवेताः।

### द्रव्यत्रयसाधर्म्यम्

## क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम्।

एवं क्षितिश्चोदकञ्चात्मानश्चेति तथोक्तास्तेषां साधर्म्यं चतुर्दशगुणवत्त्वम्। तथा हि चतुर्दशगुणा विद्यन्ते येषां ते तद्वन्तः, तेषां भावस्तत्त्वम्। समवेतास्ते, तत्समवायो वा। अत्र चान्यगुणानामन्यत्रावृत्तेः संख्यामात्रं साधर्म्यं विवक्षितमिति ज्ञेयम्।

### द्रव्यद्वयसाधर्म्यम्

## आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम्।

आकाशश्चात्मानश्चेति तथोक्तास्तेषां साधर्म्यं क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम्। क्षणिकाश्च ते एकदेशवृत्तयश्चेति तथोक्तास्ते च ते विशेषगुणाश्चेति, ते विद्यन्ते येषां ते तद्वन्तस्तेषां भावस्तत्त्वं तत्समवायस्ते वा समवेताः। गुणवत्त्वं सर्वेष्वस्तीति विशेषग्रहणम्। तत् क्षित्यादिष्वपि समानमित्येकदेशवृत्तिपदम्।

तथापि क्षणिकग्रहणमनर्थकम्, एकदेशवृत्तिविशेषगुणवत्त्वस्य अन्यत्राभावात्। तन्न। द्वितीयसाधर्म्यस्य विवक्षितत्वात्। तथाहि, विशेषगुणवत्त्वम् अन्यत्राप्यस्तीति क्षणिकग्रहणम्। क्षणिकत्वञ्च आश्रये विद्यमाने सति आशुतरविनाशित्वम्। क्षणिकगुणवत्त्वञ्च विभागापेक्षया अन्यत्राप्यस्तीति विशेषग्रहणम्। क्षणिकविशेषगुणवत्त्वञ्च अन्यत्राभावाद् व्यावृत्तं साधर्म्यमिति।

**दिक्कालयोः पञ्चगुणवत्त्वम्, सर्वोत्पत्तिमतां निमित्तकारणत्वञ्च ।**

तथा * दिक्कालयोः पञ्चगुणवत्त्वम् * विशेषात् साधर्म्यम् । पञ्च गुणा विद्यन्ते ययोस्तौ पञ्चगुणवन्तौ, तयोर्भावः पञ्चगुणवत्त्वम् । पञ्चगुणोपलक्षितः समवायस्ते वा समवेताः । एतच्च संख्यामात्रसाम्येन साधर्म्यम् ।

तथा च सर्वे च ते, उत्पत्तिर्विद्यते येषां ते उत्पत्तिमन्तश्चेति तथोक्तास्तेषामुत्पत्तौ निमित्तकारणत्वमिति । निमित्तपदस्य कारणपर्यायस्याप्यभिधानं समवाय्यसमवायिव्यवच्छेदार्थम् । अन्यथा हि समवाय्यसमवायिसाधारणत्वात् तदपेक्षया असम्भवित्वमेव स्यात् ।

तथा हि निमित्तकारणस्य भावो निमित्तकारणत्वम् । येन सता निमित्तकारणमिति व्यवहारः । स च कारणयोः सतोः समवाय्यसमवायिलक्षणाभावः । तेन सता तथा व्यवहारात् । यद्यपि स्वगतसंख्याद्युत्पत्तावस्ति समवायिकारणत्वम्, तथापि सर्वेषामेवेति विशेषणाददोषः ।

**क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः ।**

एवं क्षितिश्च तेजश्चेति क्षितितेजसी, तयोर्नैमित्तिकद्रवत्वयोगः साधर्म्यम् । निमित्तादुपजातं नैमित्तिकमिति । निमित्तशब्दः सामान्यशब्दोऽप्यर्थादग्निसंयोगे वर्त्तते । नैमित्तिकञ्च तद् द्रवत्वञ्चेत्येतेन योगः समवायः साधर्म्यमिति ।

**एवं सर्वत्र विपर्ययात् साधर्म्यं वैधर्म्यञ्च वाच्यमिति ।**

इदानीमुपसंहारव्याजेन शिष्यं शिक्षयति, यदेतद् व्याख्यातं मया साधर्म्यं तदेव सर्वत्र विपर्ययाद् व्यावृत्तं भेदान्तराद् वैधर्म्यं वाच्यमिति ।

यद् वा साधर्म्यं व्याख्यातमित्युपसंहारः । विपर्ययाद् वैधर्म्यं वक्ष्यमाणमित्यनागतार्थसूचनमिति ।

---

## [ वैधर्म्यप्रकरणोपक्रमः ]

**इहेदानीमेकैकशो वैधर्म्यमुच्यते ।**

पृथिव्यादीनां नवानां, पुनः पञ्चानामित्यादिरूपेण साधर्म्यमभिधाय प्रत्येकं तेषां वैधर्म्यमाह * इह * इत्यादिना । इहेति क्षित्यादिमनःपर्यन्तेषु प्रकरणेषु । * इदानीम् * साम्प्रतम् । * एकैकशो वैधर्म्यमुच्यते * इति । नन्वेकैकश इति वीप्सायां शस्प्रत्ययस्य विधानाद् व्यर्थं वीप्साभिधानम् ।

एकैकशो विनिघ्नन्ति विषया विषसन्निभाः । [ ? ]

इति व्यासप्रयोगाददोष इत्येके ।

प्रत्येकं क्षित्यादेर्वीप्सायां वैधर्म्यलाभे पुनर्वीप्साकरणम् अवान्तरभेदेन शरीरादीनां वैधर्म्यज्ञापनार्थमिति गुरवो वदन्ति ।

वैधर्म्यन्तु विशिष्ट इतरस्माद् व्यावृत्तो धर्मो यस्यासौ विधर्मा, तस्य भावो वैधर्म्यम् । असाधारणस्तत्त्वव्यवस्थापको धर्मः, केवलव्यतिरेक्यनुमानमिति यावत् ।

**द्रव्यग्रन्थे पृथिवीवैधर्म्यम्**

**पृथिवीत्वाभिसम्बन्धात् पृथिवी । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारवती । एते च गुणविनिवेशाधिकारे रूपादयो गुणविशेषाः सिद्धाः । चाक्षुषवचनात् सप्त संख्यादयः । पतनोपदेशाद् गुरुत्वम् । अद्भिः सामान्यवचनाद् द्रवत्वम् । उत्तरकर्मवचनात् संस्कारः ।**

तत्रादावुद्दिष्टत्वात् पृथिव्यास्तदुच्यते * पृथिवीत्वाभिसम्बन्धात् * इति । पृथिवीति लक्ष्यनिर्देशः । पृथिवीत्वाभिसम्बन्धादिति लक्षणम् असाधारणो धर्मः । पृथिवीत्वेनाभि-

सम्बन्धः पृथिवीत्वेनोपलक्षितः समवाय इति। पृथिवी धर्मिणी इतरेभ्यो भिद्यत इति साध्यो धर्मः, पृथिवीत्वाभिसम्बन्धात्, यस्त्वितरस्मान्न भिद्यते न चासौ पृथिवीत्वेन सम्बद्धो यथोदकादि, न च तथा पृथिवीत्वेन नाभिसम्बद्धा पृथिवी, तस्मादितरेभ्यो भिद्यत इति। समवायो ह्यतिव्यापकत्वादलक्षणः स्यादिति पृथिवीत्वं विशेषणम्।

नन्वेवं पृथिवीत्वमेवासाधारणत्वाद् व्यवच्छेदसमर्थमित्यसमर्थविशेषणता हेतोर्दोषः ? न। पक्षेऽसम्भवित्वाशङ्कापरिहारार्थत्वात्। तथाहि, पृथिवीत्वात् पृथिवीत्युक्ते पक्षेऽस्ति नास्तीत्याशङ्का न निवर्त्तेत। अतः समर्थमभिसम्बन्धपदम्।

ननु भावप्रत्ययादेव सम्बन्धाधिगतेः, षष्ठ्या वा पृथिव्या भावः पृथिवीत्वमिति, स्वशब्देन तस्याभिधानं व्यर्थम् ? तन्न। भावप्रत्ययः शब्दवृत्त्या भावमभिधत्ते, नाभिसम्बन्धम्। न च गम्यां वृत्तिमाश्रित्य सम्बन्धपदस्य वैयर्थ्यम्, शास्त्रे तथाभावेऽतिप्रसङ्गात्। षष्ठी चानियतसम्बन्धाभिधायिकेति विशिष्टसम्बन्धलाभायाभिसम्बन्धपदम्।

ननु चैवमुपाधिभेदादवास्तवो भेदः समवायस्येत्यवारकं लक्षणं कथमितरेभ्यो भेदज्ञापकमिति स्यात् ? न। कल्पितभेदस्याप्यर्थक्रियाकरणात्, यथा श्रोत्रस्य। तथाहि, श्रोत्रं कर्णशष्कुल्याकाशसंयोगोपलक्षितो नभोदेशः, स चावास्तवभेदोऽपि शब्दोपलब्धिलक्षणामर्थक्रियां विदधाति। तद्वत् समवायेऽप्यदोषः। समवेतं वा पृथिवीत्वं लक्षणम्। पृथिवीत्वञ्च तद् अभिसम्बध्यत इत्यभिसम्बन्धश्चेति कर्मधारयपरिग्रहात्।.

ननूभयपदव्यभिचाराभावाद् विशेषणसमासः कथम् ? तथा सति [अभि] सम्बध्यत इति अभिसम्बन्धः, समवेतं रूपादि दृष्टमित्यर्थवत् पृथिवीत्वम्। पृथिवीत्वञ्चेत्युक्ते नासमवेतं पृथिवीत्वं सम्भवतीति व्यभिचाराभावः।

अथ अपृथिवीव्यावृत्तिरूपं पृथिवीत्वमसमवेतम्, तन्निरासायार्थवदभिसम्बन्धपदम्। न। तस्यासिद्धत्वात्। प्रमाणेन हि प्रसिद्धस्य विशेषणेन व्युदासो दृष्टः। यथा नीलेनानीलादेः। न वा अपोहः सिद्धः, वृत्तिविकल्पानुपपत्तेः। बाधकस्याप्रमाणतया वास्तवसामान्यसद्भावादेकपदाव्यभिचारेऽपि कर्मधारयसमासाभ्युपगमाददोष इति।

केचिद् अभिग्रहणम् अभि समन्तात् सम्बन्ध इति पक्षे व्याप्त्यर्थम्, आभिमुख्येन च सम्बन्ध इति केवलव्यतिरेकाव्यभिचारेण गमकत्वप्रदर्शनार्थम्।

ननु किम् इतरस्माद् व्यावृत्ता प्रमाणसिद्धा पृथिवी पक्षीक्रियते, अथ अप्रसिद्धेति ? यदि अप्रसिद्धा, पक्षीकरणमयुक्तम् । अथ प्रमाणप्रसिद्धा व्यावृत्ततया, तर्हि लक्षणवैयर्थ्यम् । अथाव्यावृत्ततयोपलब्धा, तदसत् । व्यावृत्तं हि पदार्थानां स्वरूपम्, तेन च वपुषा गृह्यमाणा धर्मिणो न रूपान्तरेणेति दृष्टम् । नैतदेवम् । लोकप्रसिद्धि-वशेन पृथिव्याः पक्षीकरणात् । तथाहि, यत्र जनानां पृथिवीति व्यवहारः सा पक्षीकृतेत्यबाधः ।

नन्वितरेतराश्रयत्वम्, पृथिवीतरेभ्यो भिद्यत इत्यत्रेतरेभ्यो भेदः साध्यस्तेषान्तु पृथिवीतो भेदेन प्रतिपत्ताववधिभावो घटत इति एकाप्रतिपत्तावितराप्रतिपत्ते-रुभयाभावप्रसङ्गः ? तन्न । असाधारणधर्मोपलम्भसहकारिणेन्द्रियेण व्यावृत्तरूपतया निर्विकल्पकज्ञाने पृथिवी प्रतिभासते । तथा अबादयोऽप्यसाधारणधर्मोपलम्भव्यावृत्त्या नः परस्परं चक्षुर्व्यापारादेव प्रथन्ते । स्वयं प्रतिपन्नेऽपि भेदे परप्रतिपादनायानुमानोप-न्यासः । तथाहि, विप्रतिपद्यमानः परः परार्थानुमानेनैव प्रतिपाद्यत इति ।

अथेतरेभ्यो भेदे साध्येऽबादयोऽपीतरेभ्यो भिद्यन्त इति विद्यमाने सपक्षे कथं केवलव्यतिरेकाव्यभिचारः ? न । साध्यापरिज्ञानात् । तथाहि, पृथिवीतरेभ्यो भिद्यत इति, पृथिवीतरेभ्यो निरवशेषेभ्यो भिद्यत इति साध्यार्थः । तथा च सपक्षाभावः । नह्युदकादयः स्वात्मभ्यो भेदिन इति ।

अथ पृथिवीत्वं यद्यसाधारणधर्माद् भिद्यते ततोऽप्यन्यस्माद् भिद्यत इत्यनवस्था । अभेदे तु साध्यसाधनभावानुपपत्तिः, अतः स्वतो भिद्यते, क्षितेरपि तथाभावेन बाधात् ।

अथ पृथिवीत्वं पृथिव्या विशेष्यते पृथिवी च पृथिवीत्वेनेतीतरेतराश्रयत्वम् ? नैतदेवम् । पृथिव्यामनुवर्त्तमानवपुषो भेदान्तराद् व्यावृत्तस्येन्द्रियव्यापारान्निर्विकल्पक-ज्ञाने प्रतिभासनात् । तथा ह्यनुगतस्वभावस्यापीतरस्माद् व्यावृत्तं स्वरूपं सामान्यस्य । तच्च प्रत्यक्षेण स्वयं प्रतीतमपि परप्रतिपादनाय हेतुत्वेनाभिधीयत इत्यनवस्थाद्यभावः । न च सर्वथा विप्रतिपद्यमानः प्रतिपाद्यः स्यादिति धर्मिज्ञानं सामान्येन साधन-ज्ञानञ्चाभ्युपेयम् । केवलम् इतरेभ्यो भिन्ना पृथिवी न प्रतिपद्यत इति साधनोपन्यासः ।

तथैकं वाक्यमावर्त्यमानं भूयांसमर्थमाहेति शब्दार्थनिरूपणपरत्वेनाभिसम्बध्यते पृथिवीत्वाभिसम्बन्धादिति वाक्यम् । तथा च सामान्यं शब्दार्थः । तस्यैकतया सङ्केत-

कारणादिति जैमिनीयाः। विशेषास्त्वनियतदिग्देशसम्बन्धितया न कात्स्न्र्येनोपलब्धिभाजो भवन्तीति कथं सङ्केतविषयाः?

अथ यावतामुपलम्भस्तावत्स्वेव सङ्केतकरणाद् व्यवहारः, तर्हि विशेषान्तरे सङ्केतासम्भवाद् व्यवहारानुपपत्तिः। न च अयोगिनः प्रत्येकमशेषविशेषोपलम्भः। न चानुपलब्धेष्विदमस्य वाच्यमिदमस्य वाचकमित्यभिधानाभिधेयनियमनियोगप्रतिपत्तिः। समयप्रतिपत्तिश्च विना शब्दश्रवणादर्थप्रतिभासाभावः। अथाभिन्ननिमित्तमुपादाय विशेषेषु सङ्केतः? तदप्यसत्। अभिन्ननिमित्तसद्भावेऽपि विशेषाणामानन्त्यं नातिवर्त्तेत इति सामान्ये सङ्केतात् सामान्यं शब्दार्थः।

न च सामान्यवति सङ्केतोपलम्भेन सामान्यमभिधायानन्तरं विशेषेषु वर्त्तिष्यत इति वाच्यम्। विरम्य व्यापाराभ्युपगमेन शब्दकर्मबुद्ध्यादीनां विरम्य व्यापारासम्भवाद् [ ? ] इति सूत्रविरोधात्। तथा च विशेषणप्रतिपत्तावेव क्षीणत्वाद् विशेष्याप्रतिपादकम्। तदुक्तम्,

विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे [ ? ]।

अथ सामान्यप्रतिपत्तेरपुरुषार्थत्वाद् विशेषार्थतया प्रतिपत्तुः प्रवृत्तिनिवृत्ती न स्यातामिति। तन्न। सामान्यप्रतिपत्त्यन्यथानुपपत्त्या विशेषावबोधे सति प्रवृत्तिनिवृत्त्योर्भावात्। तथाहि,

निराधारं हि सामान्यं भवेच्छशविषाणवत्। ( श्लो० वा०, आकृति० श्लो० १० )
इत्याधारप्रतिपत्तिरित्यलमतिकल्पितेन।

सर्वमेतदयुक्तम्। अभिन्ननिमित्तोपादाने सति सामान्यवति सङ्केतकारणात् सामान्यवान् शब्दार्थः। तद् यथा आनन्त्येनावस्थिता विशेषाः, तथा ह्येकं तेष्वभिन्नं सामान्यमेकत्रोपलब्धम्। तदुपलम्भादनुपलभ्यमाना अपि विशेषाः सामान्यवन्तः, सङ्केतविषयाः शब्दाश्चानित्यत्वेऽपि विशिष्टानुपूर्वीसचिवा इति। तथाहि, यत्र यत्रेदृशं सामान्यं पश्यसि तत्र तत्रायं शब्दः प्रयोक्तव्यः। इत्थम्भूताच्च शब्दादयमर्थः प्रतिपत्तव्य इति सङ्केतग्रहो विशेषाणामानन्त्येऽपि घटत इति। तथा च शब्दश्रवणात् सामान्यवत्यर्थे प्रतिपत्तिर्दृष्टा। सा च सङ्केतप्रतिपत्तिमाक्षिपति। सङ्केतश्चानेनैव प्रकारेण घटते नान्यथेति।

अथ गोशब्दश्रवणाच्छाबलेयादिविशेषाप्रतिपत्तेर्न विशेषः शब्दार्थः। सत्यम्। किं तर्हि ? सामान्ययुक्तोऽर्थः प्रतीयते, न शाबलेयादिविशेषः। स च शाबलेयादिशब्देभ्य एव प्रतीयत इति। न चैतावता सामान्यमेव शब्दार्थः, प्रधानोपसर्जनभावेनोभयोः प्रतिभासनात्। तथा गामानयेत्यादिप्रयोगेषु सामान्यवतोऽर्थस्यानयनादिक्रिया सम्बन्धात्।

अथ सामान्यमभिधाय कथं विशेषे वर्त्तते, सूत्रविरोधात् ? न। सूत्रार्थापरिज्ञानात्। तथा च सूत्रस्यार्थः शब्दो हि एकदा विशेषणं प्रतिपाद्य पुनर्विशेषणं न प्रतिपादयतीति विरम्य व्यापारो निषिद्धः। न पुनर्विशेषणं प्रतिपाद्य विशेष्यं नाभिधत्त इति। तथा कर्म विभागं कृत्वोत्तरसंयोगं करोति, अकृतसंयोगस्य विनाशाभावात्। न च विभागं कृत्वा संयोगं करोतीति विरम्य व्यापारप्रतिषेधः। तथा विशेषणबुद्धिर्विशेष्यबुद्धिं कृत्वा न कार्यान्तरमारभत इति। एवं सुखादिष्वपि प्रतिषेधः।

ननूक्तं क्षीणशक्तिर्विशेषणे इति, 'विशेष्यं नाभिदध्यात्' इति तावच्छक्तेः कार्यविषयत्वात्। कार्यञ्च विशेषणप्रतिपत्तिवद् विशेष्यप्रतिपत्तिलक्षणमुपलभ्यमानं शक्तेर्व्यवस्थापकम्। अथ कार्यस्यैवाभावं ब्रूयात् ? स चैवं ब्रुवाणः स्वसंवेदनमपि बाधते, विशेष्यप्रतिपत्तेः संवेदनात्। भिन्नज्ञानालम्बनयोश्च विशेषणविशेष्यभावपक्षे चोद्यं नैकज्ञानालम्बने इति। समानञ्चैतदुपलभ्यमानस्य शब्दस्यार्थप्रतिपादकत्वाभ्युपगमात्। स्वात्मप्रतिपत्तौ च क्षीणत्वात् सामान्यप्रतिपादकत्वं न स्यात्। अथ सामान्यप्रतिपत्तेर्दृष्टत्वान्न तत्र शब्दशक्तेः प्रक्षयः ? तर्हि विशेषप्रतिपत्तेरपि दृष्टत्वान्न शक्तिप्रक्षयः। अर्थप्रतिपादनार्थश्च शब्दप्रयोग इति।

यच्चोक्तं शब्दसामान्यप्रतिपत्त्यन्यथानुपपत्त्या विशेषाध्यवसाये प्रवृत्तिनिवृत्ती स्यातामिति। तत्र किं सामान्यमात्रप्रतिपत्त्यन्यथानुपपत्त्या विशेषावबोधः; तद्विशेषप्रतिपत्त्यन्यथानुपपत्त्या वा ? यदि सामान्यमात्रप्रतिपत्त्यन्यथानुपपत्त्या ? तथा सति सामान्यमात्रप्रतिपत्तौ विशेषमात्रप्रतिपत्तिरिति प्रवृत्त्यभावः। अथ विशिष्टसामान्यप्रतिपत्त्यन्यथानुपपत्त्या ? स तर्हि विशेषप्रतिपन्नो विशेषणमिति शब्दादेव प्रतीयते।

अथ प्रमाणान्तरादिति यदि शब्दात् ? कथं सामान्यमेव शब्दार्थः, विशेषस्याप्यभिधायकत्वात्। अथ प्रमाणान्तरम् ? न (वा ?), प्रमाणान्तरव्यापाराननुभवात्। न च

सामान्यं परपक्षे विशेषाद् भिन्नं सम्भवतीत्यभेदे सामान्यप्रतिपत्तिवद् विशेषप्रतिपत्ति-प्रसङ्गः। अन्यथा हि एतत्प्रतिपत्तावितरप्रतिपत्तेर्भेदः। अथ इष्यत एव केनचिद्रूपेण अभिन्नं भिन्नञ्चेति। न। भेदाभेदयोर्विधिप्रतिषेधरूपत्वाद् अभिन्ने धर्मिण्यसम्भवः। तथा हि किं येन रूपेण भिन्नं तेनैव रूपेणाभिन्नमुत रूपान्तरेणेति वाच्यम्। यदि देश-भेदापेक्षया भिन्नं रूपभेदेन त्वभिन्नमित्यविप्रतिपत्तिः। परो विभिन्नदेशभेदापेक्षया भेदं प्रतिपद्यत इति।

अथानुगतव्यावृत्तात्मतया प्रतिभासाद् वस्तुबोधात्मकत्वम्। तदसत्। अनुगत-सामान्यसम्बन्धादनुगतम्, स्वरूपेण तु व्यावृत्तमितीष्यत एव द्विरूपता। न चैकत्वे तादात्म्ये सति द्विरूपतोपपद्यत इति समवायलक्षणः सम्बन्धोऽभ्युपगन्तव्यः। स्वरूपभेदेन तु भेदे समवायं विना नियतविशेषेण व्यपदेशानुपपत्तिः। पृथिव्याः पृथिवीत्वमित्यादि-सम्बन्धं विना यावत् पृथिव्या व्यपदिश्यते तदवस्थान्तरेण कस्मान्नेति नियमाभावः।

यदि च पृथिवीशब्दः पृथिवीत्वमभिदध्यात् पृथिवीत्वशब्दस्यार्थो वक्तव्यः। न चाभेदे तद्धितसाफल्यं पश्याम इति सामान्यवानर्थः पृथिवीशब्दस्येति युक्तम्। अथ एकत्र सङ्केतितः पृथिवीशब्दः कथमर्थान्तरे प्रवर्त्तिष्यत इत्याह पृथिवीत्वाभिसम्बन्धात् निमित्तात् पृथिवीशब्द एकत्र सङ्केतितः, स चार्थान्तरेऽपि तद्वशात् प्रवर्त्तत इति सङ्केतानुपपत्तेर्विशेष एव शब्दार्थो न सम्भवतीति सांख्यशाक्तपक्षोऽपि निषिद्ध एव।

तथा "शक्तयः सर्वभावानां कार्यार्थापत्तिगोचराः" (श्लो०वा०, शून्य०श्लो० २५४) इति तन्निरासः। यत् पृथिवीत्वाभिसम्बन्धात् पृथिवी कार्यं करोतीति पृथिवीत्वमेव निजा शक्तिरन्या तु चरमसहकारिरूपा, तत्सद्भावे कार्यकरणात् तदभावे चाकरणादिति। तथाहि, विद्यमाना अपि तन्तवः कार्यं नारभन्तेऽन्त्यतन्तुसंयोगं विनेति सैव शक्तिः। अथ अर्थान्तरमर्थान्तरस्य कथं शक्तिः? अनर्थान्तरत्वेऽपि समानमेतत्। सैव तस्यैव शक्तिरिति। अथ यदि पूर्वेषां चरमसहकार्येव शक्तिस्तस्याप्यशक्तस्याकारण-त्वादन्या शक्तिर्वाच्येत्यनवस्था। नैतदेवम्। चरमस्य हि सहकारिणः पूर्वसहकारिण एव शक्तिः, इतरेतराभिसम्बन्धेन कार्यकरणात्। स एव च समग्राणां भावः सामग्रीति भावप्रत्ययेनोच्यते, तेन हि सता समग्रव्यपदेशदर्शनात्।

ननु यदि अतीन्द्रिया शक्तिर्नेष्यते, मणिमन्त्रादिना तर्हि प्रतिबद्धोऽग्निर्न स्फोटादि-कार्यमारभत इति कस्य प्रतिबन्धः? न चाग्नेः, न चाग्निसंयोगस्य उपलभ्यमानत्वा-

दिति शक्तेः प्रतिबन्धः। तदसत्। मणिमन्त्रादिप्रतिबन्धकाभावस्यापि कार्योत्पत्तौ सहकारित्वात्। तदभावे तु न कार्यस्योदय इति तद्विशिष्टसंयोग एव शक्तिः। न पुनः शक्तेः प्रतिबन्धो नानुत्पत्तिर्विनाशो वा सम्भवतीति। चिरोत्पन्नत्वाद् विनष्टायाश्च पुनरुत्पत्तिकारणाभावादनुत्पत्तिप्रसङ्गः। अशक्तस्य कार्यानुत्पादकत्वादित्यन्वयव्यतिरेकाभ्यां प्रतिबन्धकाभावविशिष्टोऽग्निसंयोग एवाग्निशक्तिरिति ज्ञातम्। एवमत्रापि पृथिवीत्वं निजा शक्तिरपरा तु सहकारिभूतेति।

पृथिव्यादीनां नवानां गुणवत्त्वं समवायिकारणत्वं क्षित्युदकात्मनां चतुर्दशगुणवत्त्वञ्चोक्तम्। तत्र कैर्गुणैर्गुणवती, केषामुत्पत्तौ समवायिकारणत्वम्, के वा चतुर्दश गुणाः, किञ्च गुणात्मकं लक्षणमित्याह रूपादिवाक्यम्। रूपादयः संस्कारपर्यन्तं विद्यन्ते यस्याः सा रूपादिसंस्कारवती। किमेते स्वतन्त्रतया वृत्तिकृता प्रतिपाद्यन्ते, उत सूत्रकारस्याभिप्रेता इत्याशङ्क्याह * एते च गुणविनिवेशाधिकारे * इत्यादि। एते च सूत्रकारेणाभिहिताः। कस्मिन्नधिकारे? गुणा विविधमनेकप्रकारेण विनिवेश्यन्ते यस्मिन्नधिकारे स तथोक्तो द्वितीयोऽध्यायः, तत्र सूत्रकारेण प्रतिपादिताः।

तथा च रूपरसगन्धस्पर्शवती पृथिवी (वै० सू० २।१।१) इत्यनेन विशेषगुणाश्चत्वारोऽभिहिताः। * तथा चाक्षुषवचनात् * इति। संख्याः, परिमाणानि, पृथक्त्वम्, संयोगविभागौ, परत्वापरत्वे, कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि (वै० सू० ४।१।१२) इति सूत्रं दर्शयति।

सूत्रस्यार्थः--रूपिद्रव्यमुपलब्धिलक्षणप्राप्तं महत्त्वाद्युपेतम्, तत्र समवायात् संख्यादयश्च प्रत्यक्षग्राह्या इति, अन्यपरेणापि सूत्रेण रूपवति द्रव्ये संख्यादीनां सद्भावोऽभिहितः। अन्यथा ह्यविद्यमानत्वादेव तत्र तेषामुपलम्भो न स्यादिति।

पदार्थश्च संख्या इति बहुवचनं संख्यात्वव्यतिरेणैकत्वत्वाद्यपरसामान्यप्रदर्शनार्थम्। परिमाणानीति। तथा परिमाणत्वापेक्षयाणुत्वाद्यपरसामान्यज्ञापनार्थम्। पृथक्त्वमित्येकवचनं पृथक्त्वत्वसामान्यापेक्षया एकपृथक्त्वत्वाद्यपरसामान्यशून्यताप्रदर्शनार्थम्। संयोगविभागाविति द्विवचनेन संयोगत्वविभागत्वव्यतिरेकेण अपरसामान्याभावेऽपि विभागस्य संयोगापेक्षिताज्ञापनार्थं समासकरणम्। तथा परत्वापरत्वे इत्यपि द्विवचनं परत्व [त्वा] परत्व [त्व] सामान्यापेक्षया अपरसामान्याभावेऽपि साहचर्यज्ञापनार्थं समासकरणमिति।

तथा * पतनोपदेशाद् * इति। गुरुत्वात्पतनमिति (वै० सू० ५।१।७)। सूत्र दर्शयति। यथा च पतने गुरुत्वं कारणं तथा वक्ष्यामो गुरुत्वपरीक्षायाम्। * अद्भिः सामान्यवचनात् * इति। सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् (वै० सू० २।१।६) इति सूत्रं दर्शयति। सर्पिरादीनामग्नि-संयोगाद् द्रवत्वं सम्पद्यतेऽद्भिः तथा सामान्यं यथा भवतीति सूत्रार्थः। * उत्तरकर्म-वचनात् * इति। नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारात्तथोत्तरमुत्तरञ्च (वै० सू० ५।१।१७) इति सूत्रं दर्शयति इषोः शरस्याद्यं कर्म नोदनाद् भवतीति, कर्म च नोदनापेक्षं संस्कारमारभते। कर्मकारिताच्च संस्कारात् तथोत्तरञ्च, एकः संस्कारोऽनेकं कर्मारभते पतनं यावदिति। इषोः समवायिकारणस्यावगतायां सम्भविन्यामिषोरिति षष्ठ्यभिधानं तदवयवेष्वपि कर्मज्ञापनार्थम्। यद् वा षष्ठ्यर्थस्य विद्यमानत्वात् तदभिधानेऽप्यदोषः।

**क्षितावेव गन्धः। रूपमनेकप्रकारकं शुक्लादि। रसः षड्विधो मधुरादिः। गन्धो द्विविधः सुरभिरसुरभिश्च। स्पर्शोऽस्या अनुष्णा-शीतत्वे सति पाकजः।**

**सा तु द्विविधा, नित्या अनित्या च। परमाणुलक्षणा नित्या, कार्यलक्षणा त्वनित्या। सा च स्थैर्याद्यवयवसन्निवेशविशिष्टजाति-बहुत्वोपेता शयनासनाद्यनेकोपकारकरी च।**

**त्रिविधश्चास्याः कार्यं शरीरेन्द्रियविषयसंज्ञकम्।**

**तत्र शरीरं द्विविधं योनिजमयोनिजञ्च। तत्रायोनिजम् अनपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते। क्षुद्रजन्तूनां यातनाशरीराण्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते।**

**शुक्रशोणितसन्निपातजं योनिजम्। तच्च द्विविधं जरायुजमण्डजञ्च। मानुषपशुमृगाणां जरायुजम्, पक्षिसरीसृपाणामण्डजम्।**

**इन्द्रियं गन्धव्यञ्जकं सर्वप्राणिनां जलाद्यनभिभूतैरसम्पृक्तैः केवलैः पार्थिवावयवैरारब्धं घ्राणम् ।**

**विषयस्तु द्व्यणुकादिप्रक्रमेणारब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः । तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः । पाषाणा उपलमणिवज्रादयः । स्थावरा वृक्षतृणौषधिगुल्मलतावतानवनस्पतय इति ।**

रूपादयो हि असाधारणत्वाद् भेदका इति प्रतिज्ञातार्थसमर्थनार्थमसाधारणत्वमाह * क्षितावेव गन्धः * इत्यादि । अथोदके तेजसि वोपलम्भाद् गन्धस्यावधारणमनुपपन्नम् ? न । संयुक्तसमवायेनोपलम्भात् । तथाहि, उदके वासकद्रव्यसम्पर्काद् गन्धाभिव्यक्तिर्दृष्टा, तेजसि वा इन्धनविशेषानुविधानादिति । यदि पुनः स्वभावत एव स्याद् गन्धस्तेजसीन्धनविशेषं विना, वासकद्रव्यसम्पर्कञ्च विना वारिण्युपलभ्येत । न चैवम् । अतो युक्तमेतत् क्षितावेव गन्ध इति ।

रूपं शुक्लाद्यनेकप्रकारं क्षितावेव, नोदके न तेजसि । नियमेन शुक्लमेवोदके भास्वरञ्च तेजस्युपलभ्यते । पृथिव्यान्त्वनेकप्रकारम् । तथा हि पटादिभेदभिन्नत्वात् पृथिव्याः काचिच्छुक्ला काचिद्धरितेत्युपलम्भः ।

ननु युक्तं व्यक्तिभेदापेक्षयानेकरूपसम्बन्धित्वं पृथिव्याः, या तु गोलकरूपा न तस्यामनेकप्रकारम् । अथ तत्रापि केचिद् भागाः शुक्लाः, केचित् कृष्णा इत्याद्युपलम्भाद् अनेकरूपसम्बन्धित्वम् । न । अवयवावयविनोरन्यत्वाद् अवयवानामनेकरूपसम्बन्धित्वे कथमवयविनस्तथाभावः, अभ्युपगमे वा सूत्रव्याघातः । अविभुनि द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामसम्भवात् ( लुप्तं वै० सू० ) इति व्याहन्येतेति ।

व्यापके हि द्रव्ये समानेन्द्रियग्राह्याणां बहूनामपि सम्भवो दृष्टो यथा शब्दानामाकाश इति तन्निरासाय अविभुग्रहणम् । तथा अविभुनि द्रव्ये त्रिभिन्नेन्द्रियग्राह्याणां रूपरसादीनां सम्भवादिति समानेन्द्रियग्राह्यपदम् । समानेन्द्रियग्राह्याणामपि संख्यादीनां बहूनामविभुनि द्रव्ये सम्भवो दृष्टस्तद्व्यवच्छेदाय विशेषग्रहणम् ।

अतो बहूनां रूपाणामेकस्यां पृथिव्यामभ्युपगमे व्याघातः। अभ्युपगम्यापि ब्रूमः शुक्लादीनां बहूनामेकत्र सद्भावे किमाश्रयव्यापित्वं प्रदेशवर्तित्वं वा? आश्रयव्यापित्वे सत्येकावयवसहितेऽप्यवयविन्युपलब्धे परावयवावरणेऽप्यनेकरूपं गृह्येत, आश्रयव्यापित्वादेव। अथ प्रदेशवृत्तित्वम्? तथापि विशेषणमाश्रयव्यापित्वमिति विरुध्यते।

अथैकं चित्रं तद् रूपमिति। यथा शुक्लं पीतमित्यादिविशेषस्तथा चित्रं रूपविशेष एव। अत्रोक्तम्,

चित्रं तदेकमिति चेदिदं चित्रतरं ततः। ( प्र० वा० २।२०० )
यद्येकं तत् कथं चित्रं चित्रञ्चेदेकता कथम् ॥

एकं चित्रञ्चेत्यतिशयेनाश्चर्यमिति। न परस्परविरुद्धानां रूपाणामेकरूपारम्भकत्वं न्याय्यम्। समानरूपारम्भकत्वेनोपलम्भात् शुक्लात् शुक्लमिति।

अथ पृथिव्यामप्सु च शुक्लादिविशेषरूपमात्रमुपलम्भान्यथानुपपत्त्या निश्चीयते। अन्यथा हि नीरूपत्वाच्चक्षुर्ग्राह्यत्वं न स्यात्, रूपवतो द्रव्यस्य चक्षुर्ग्राह्यत्वादिति। न चावयवरूपादेव चक्षुर्विषयत्वम्। अन्यरूपेणान्यस्य चक्षुर्विषयत्वे वायोरपि तथाभावप्रसङ्गात्। अतश्चक्षुर्विषयत्वाद् रूपमात्रं क्षिताविति।

नन्वेवमनेकप्रकारं क्षितेः रूपमिति विरुध्यते, रूपमात्रस्य शुक्लाद्यन्तर्भावाभावात्। तथा ह्यनेकप्रकारं शुक्लादिभेदभिन्नमित्युच्यते। रूपमात्रञ्च विशेषरहितमिति विरोधः।

तदेतत् सर्वमविदितार्थम्। शुक्लाद्यनेकप्रकारस्य रूपस्य क्षितावभ्युपगमात्। ननूक्तं सूत्रविरोध इति। न। सूत्रार्थापरिज्ञानात्। तथा च सूत्रस्यार्थः, अविभुन्यव्यापके द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामेकाकाराणामसम्भव इति प्रतिषेधः। न त्वनेकप्रकाराणाम्। कथमेतत्? अनेकाकारस्वरूपस्य क्षितावुपलम्भात्। तथा रसस्य षड्भेदस्येति।

अथैकाकाराणां बहूनां रूपाणां रसानाञ्चैकत्र सद्भावस्तस्मान्नेष्यते, वैयर्थ्यात्। तथा ह्येकेनैव शुक्लरूपेण रूपप्रत्ययस्य जनितत्वाद् द्वितीयस्य वैयर्थ्यमेव। तथा मधुररसेन मधुरप्रत्ययस्येति।

अथ शुक्लादीनामेकस्य सद्भावे किं व्याप्यवृत्तित्वम्, उताव्याप्यवृत्तित्वम् इत्युक्तम्। तत्राव्याप्यवृत्तित्वे न विरोधः। शेषाणामाश्रयव्यापित्वमेवेत्यवधारणानभ्युपगमात्। अत एवैकावयवसहितस्य पटस्योपलम्भात् तदेकरूपोपलम्भोऽपि। आश्रयव्यापितया अनेकरूपाणामनुपलम्भाच्चित्रप्रतिभासाभावः।

अथ किं चित्रादुत्पद्यते चित्रम्, अथाचित्रादिति? चित्रादुत्पत्त्यभ्युपगमे पटकारणकारणेष्वपि चित्रप्रतिभासप्रसङ्गः। अथाचित्रादुत्पद्यते? तत्रा हि एकरूपः सर्वत्र चित्ररूपोत्पत्तिप्रसङ्गः। नैतद् युक्तम्। नानारूपाणि हि कारणानि नानारूपं कार्यमारभन्त इत्युपलब्धम्। न चैवं तत्कारणकारणेषु नानारूपाणि सन्तीति चित्रानुत्पादः। न च तन्तूनां नीलाद्यनेकरूपसम्बन्धित्वात् पटेऽप्यनेकरूपारम्भकत्वे किञ्चिद् बाधकमस्ति। कारणगुणपूर्वप्रक्रमेण तथाविधस्य रूपस्योपादानात्। तथाहि, प्रत्येकं कारणेष्वविचित्रादपि रूपान्नीलान्नीलं पीतात्पीतमिति युक्तम्। भवतु चैवैकं चित्रं रूपं नीलादिरूपैरेकरूपारम्भात्। यथा हि शुक्लादिर्विशेषो रूपस्य तथा चित्रं रूपादिविशेष एव। यद्यपि शुक्लादिशब्दैर्न व्यपदिश्यते तथापि स्वशब्देन व्यपदेशादस्तित्वम्।

अथ विरुद्धानां नीलादीनां कथमेकरूपारम्भकत्वम्? यथा शुक्लानामिति। यथा हि बहूनि शुक्लरूपाणि एकं शुक्लरूपमारभन्त इत्युपलब्धं तथा नीलादीनामपि चित्ररूपारम्भकत्वं दृष्टत्वादभ्युपगन्तव्यम्। अथ चित्रशब्दस्य नानापर्यायत्वाद एकं चित्रञ्च इतीदमेव चित्रमाश्चर्यमिति। तदसत्? यथा नानारूपेषु चित्रव्यपदेशः 'चित्रास्तन्तवो नीलादिरूपसम्बन्धिनः' इति, तथा तदारब्धेऽपि पटे चित्रव्यपदेशः 'चित्रः पटः' इति 'चित्रं रूपमस्य' इति। न चावश्यं नानारूपसम्बन्धिष्वपि पटादिषु चित्रव्यपदेशो दृष्टः। नानारूपैस्तु कारणैरारब्धेऽवश्यं भवतीति।

अथैकत्वाच्चित्ररूपस्य एकावयवसहितेऽप्यवयविन्युपलब्धे शेषावयवावरणे विचित्रप्रतिभासः स्यात्? न। सहकार्यभावात्। तथा ह्यवयवेषु नानारूपोपलम्भसहकारीन्द्रियमवयविनि चित्रप्रतिभासं जनयतीत्यन्वयव्यतिरेकाभ्यामुपलब्धम्, तेन शेषावयवावरणे तद्रूपाणामग्रहणादवयविनि चित्रप्रतिभासाभावः। न चाप्रतिभासादेकान्तेनासत्त्वं सहकार्यभावेनाप्यनुपलम्भात्।

यच्च रूपमात्रमुपलम्भान्यथानुपपत्त्या ज्ञायत इति कैश्चिदुक्तं तत्रापि न दोषो विप्रतिपद्यमानस्यानुमानोपन्यासात्। तथाहि, शुक्लादिविशेषव्यतिरिक्तं चित्रं रूपं

क्षितौ विद्यमानमपि वैजात्याद् यो न मन्यते तं प्रत्यनुमानं क्षितेरुपलम्भाद् रूप [व] त्त्वं विज्ञायत इति, चक्षुषोपलम्भाच्च। सिद्धे रूपवत्त्वे शुक्लादिशब्दैर्व्यपदेशासम्भवाच्चित्रशब्देनाभिधीयत इति सिद्धम्।

एतेन रसो व्याख्यातः। रसः षड्विधो मधुरादिः क्षितावेव। व्यक्तिभेदेन एकस्याञ्च व्यक्ताविति। तथा चैकस्यामपि हरीतक्यामुपलभ्यते षड्विधो रस इति। अत एव षड्भेदस्यान्यत्रानुपलम्भाद् इतरेभ्यो भेदकत्वम्।

तथा गन्धो द्विविधः सुरभिरसुरभिश्च। एकस्यां पृथिव्यां व्यक्तिभेदेन [एकस्यां] चेति पूर्ववत्। अथ सुरभिगन्धाभाव एवासुरभिरिति व्यवहारसम्भवाद् गन्धस्य द्वैविध्यमनुपपन्नम्? न। उभयोस्तीव्रतरादिभेदभिन्नत्वात्। यथा हि सुरभिगन्धे तीव्रतरादिव्यवहारस्तथा असुरभिगन्धेऽपीति। सुरभिगन्धाभावे च एतन्नोपपन्नम्, अभावस्य निरतिशयत्वादिति।

स्पर्शोऽस्याः पृथिव्याः अनुष्णाशीतत्वे सति पाकजः। अनुष्ण इति उष्णस्पर्शव्यवच्छेदार्थम्। अशीत इति शीतात्, पाकज इति वायवीयात्। अथ पाकजोऽग्निसंयोगज इत्युक्ते न व्यभिचारोऽस्तीति किमर्थमनुष्णाशीतग्रहणमिति चेत्, स्वरूपकथनार्थम्।

अन्ये तु (किल) पाकादग्नेरुष्णस्पर्शो भवतीति अनुष्णग्रहणम्। अशीतग्रहणमेव तु स्वरूपार्थमिति।

अथ रूपादीनामिव वैलक्षण्याप्रतिभासनान्न पाकजत्वं स्पर्शस्य। तन्न। प्रत्यक्षेण वैलक्षण्याप्रतीतावप्यनुमानेन पाकजत्वप्रसिद्धेः। तथा च पार्थिवस्पर्शः, पाकजः, पार्थिवविशेषगुणत्वात्, तद्गतरूपादिवदिति।

नन्वेवं सामान्यगुणानामपि पाकजत्वप्रसङ्गः पार्थिवगुणत्वाद् रूपवदिति। नैतद् युक्तम्। सामान्यगुणानां पक्षीकरणेऽग्निसंयोगेनैवानेकान्तः। तथाहि, पार्थिवपरमाणावग्निसंयोगोऽग्निसंयोगजो न भवति पार्थिवगुणश्चेति। न चैवं पार्थिवविशेषगुणत्वं व्यभिचरतीति। सपक्षैकदेशे वर्त्तमानस्यात्यन्तं विपक्षाद् व्यावृत्तेर्गमकत्वमेव। न च पक्षे प्रत्यक्षागमाभ्यां विरुध्यत इति न कालात्ययापदिष्टः। न च प्रकरणसमः तत्त्वानुपलब्धेरप्रयोजकत्वात्। अतः पाकजस्पर्शादिकारणत्वाद् इतरेभ्यो भिद्यते पृथिवीति।

समानानां भावः सामान्यम् भेदाधिष्ठानमतो भेदमाह * सा तु द्विविधा * इति। सा तु पृथिवी द्विविधा। केन रूपेणेत्याह * नित्या चानित्या च *। नित्या परमाणुलक्षणा परमाणुस्वभावा। कार्यलक्षणा कार्यस्वभावा त्वनित्येति भेदः। भेदे च सति सामान्यलक्षणमुपपद्यत इत्यसम्भवित्वाशङ्काव्युदासः।

सर्वस्य कार्यस्य विनाशे समवायिकारणाभावात् पुनरुत्पत्तिर्न स्यादित्याशङ्कानिरासार्थञ्च वाक्यम् * सा तु द्विविधा नित्या चानित्या च *। अनित्यायाश्च नाशे नित्या पुनर्द्व्यणुकादिप्रक्रमेण स्वर्गादौ कार्यमारभत इति सिद्धम्।

कथं पुनः परमाणुस्वभावा पृथिवी ज्ञायत इत्याशङ्क्याह * कार्यलक्षणा *। कार्येण लक्ष्यते ज्ञायत इति। तथा हि कार्यं समवायिकारणपूर्वकं तत्कारणमपि अन्यसमवायिकारणजन्यमिति यावदाद्यं कार्यं तदपि समवायिकारणजन्यमिति। तज्जनकाः परमाणवः। तथा कार्यादल्पपरिमाणं समवायिकारणम्। तस्याप्यन्यदल्पपरिमाणमित्याद्यं कार्यं निरतिशयाणुपरिमाणैरारब्धमिति ज्ञायते।

अथ तदवयवानामपि पर्यवसानं नेष्यते नित्यकारणानभ्युपगमात्। तर्हि कार्यस्याकस्मिकस्यासम्भवात् तत्कारणेऽप्यन्यं समवायिकारणमित्यनवस्थायां कार्यद्रव्यस्याल्पतरादिभेदो न स्यात्। तथाहि, अल्पकारणारब्धमल्पं भूयःकारणारब्धं [ महद् ] इति दृष्टम्। न च कार्यद्रव्यस्य नित्यकारणानभ्युपगमेनानवस्थायामेतदुपपद्यते, सर्वस्यापि अनन्तकारणजन्यत्वाविशेषादिति। यथा अनन्तकारणैरारब्धा गोलकरूपा पृथिवी तथा घटादिकार्यमपीत्येकाकारताप्रसङ्गः। न च संख्याथलपरिमाणैरेकाकारतोपलब्धा घटादेर्भिन्नपरिमाणत्वात् भिन्नपलत्वाच्चेति। तथा हि किञ्चिद्धीनं पञ्चपलमधिकतरञ्च दशपलं समानकारणैरारब्धं बहुभिश्चेति वैचित्र्यम्। तच्चानवस्थायां न स्यात्।

न च नित्यानभ्युपगमे प्रलयावस्थायां सर्वस्य कार्यद्रव्यस्य विनाशे पुनरुत्पत्तिर्भवेत्, अभावस्य समवायिकारणत्वाभावादिति। यथा च प्रलयावस्थायां सम्भवति तथा च वक्ष्यामो भूतपरीक्षायामिति। अतो नानवस्था व्यावर्त्तनीया। पटादिकारणकारणानामल्पतरादिभावेनावस्थितानामादिकार्यमभ्युपगन्तव्यम्।

तदाद्यं कार्यं समवायिकारणजन्यं कार्यत्वात्, यद् यत् कार्यं तत्तत् समवायिकारणजन्यं यथा पटादि, तथा चैतद् कार्यम्, तस्मात् समवायिकारणजन्यमिति।

न च कार्यत्वमभावेन व्यभिचरतीति वाच्यम्। स्वकारणसत्तासम्बन्धरूपत्वात् कार्यत्वस्य। तथा घटादिकारणकारणेष्वल्पतरादिभावः क्वचिद् विश्रान्तस्तरतमशब्द-वाच्यत्वाद् महापरिमाणवत्। यत्र विश्रान्तास्ते परमाणव इति।

अथ सावयवाः परमाणवो मूर्त्तत्वाद् घटवत्, षट्केन युगपत् सम्बद्ध्यमानत्वात्, तथा पूर्वभागोऽपरभाग इति दिगुपलक्षितैर्देशैर्व्यपदिश्यमानत्वात्, सावयवकार्यारम्भकत्वाच्च तन्त्वादिवदिति।

सर्वमेतदाश्रयासिद्धं परमाणुसद्भावासिद्धेः। अथेष्यत एव परमाणोः सद्भावः, तर्हि परमाणुसद्भावावेदकप्रमाणस्याभ्युपगमात् तद्विपरीतानुमानं निर्विषयत्वादप्रमाणमिति। अभेद्याः परमाणवः परेणाभ्युपगमात् तस्यानिष्टापत्तिः क्रियत इति प्रसङ्गसाधनम्। तत्र यदि प्रमाणेनाभ्युपगताः परेण परमाणवस्तस्य प्रामाण्याभ्युपगमेऽनुत्थानं विपरीतानुमानस्य। अथाप्रमाणात्, एवं तर्हि तस्याप्रमाणतया परमाणुसद्भावो न सिद्धयतीति किमनुमानोपन्यासेनाश्रयासिद्धताप्रसङ्गात्।

तथा परमाणवः सावयवाश्चेति प्रतिज्ञावाक्ये पदयोर्विरोधः। तथाहि, परमाणुशब्दस्य निरतिशयाणुवाचित्वम्, सावयवत्वे वा अवयवापेक्षयाधिकपरिमाणत्वमिति विरोधः। न च समानाधिकपरिमाणत्वे समवायिकारणत्वमिति तदवयवाः परमाणवः। तेषामपि सावयवत्वे तदवयवाः, तेषामपि सावयवत्वे तदवयवा इत्यनवस्थायामुक्तं दूषणमल्पतरादिभेदानुपपत्तिरिति।

अथ मा भूदनवस्थेति निरवयवाः परमाणवोऽभ्युपगम्यन्ते प्रमाणतः, तर्हि तेन बाध्यमानत्वात् सावयवत्वानुमानमप्रमाणमिति।

अथ निरवयवत्वादणूनां षट्केन योगो दिग्देशव्यपदेशश्च न स्यात्। न। अन्यथापि भावात्। तथाहि, संयोगस्याव्याप्यवृत्तितया पूर्वोत्तरादिदिग्व्यवस्थिते युगपत् सम्बन्धेऽपि न सावयवत्वम्। एवं पूर्वभागोऽपरभाग इति यद्यस्ति व्यपदेशः सोऽपि मुख्ये बाधकोपपत्तेर्भाक्तो द्रष्टव्यः, अव्याप्यवृत्तिसंयोगाधारत्वसामान्यादिति।

यच्च सावयवारम्भकत्वं तत्र [ ? तच्च ] यदि सहावयवैरारम्भकत्वं तदसिद्धं निरवयवत्वात्।

अथ सावयवस्य सदावयवैर्वर्तिष्यमाणस्य कार्यस्य जनकत्वम्? तदसिद्धम्, परमाणुभ्यां द्व्यणुकारम्भात्। तथाहि, परमाणवो द्व्यणुकान्यारभन्ते न स्वात्मानम्,

नित्यत्वात्, स्वात्मनि क्रियाविरोधाच्चेति। तन्तुदृष्टान्तोऽपि साधनविकलः। ते हि नावयवसहिताः कार्यमारभन्ते, नाप्यवयवासहिता इति स्थितं कार्येण।

लक्ष्यते नित्या पृथिवीति। अभेदवादिनिरासार्थश्च सा द्विविधेति वाक्यम्। तथाहि, पृथिवी पृथिव्यन्तराद् भिद्यमाना किं पृथिवीरूपतया भिद्यत उतापृथिवीरूपतयेति? पृथिवीरूपतया पृथिव्यन्तराद् भेदे तस्याः पृथिवीत्वप्रसङ्गः। अथापृथिवीरूपतया भिद्यते, या तर्हि भिद्यते सा पृथिवी न स्यात्। अथावान्तरविशेषसम्बन्धाद् भेदः? तेऽपि यदि विशेषान्तरात्, अनवस्था। अथान्तरेण विशेषं विशेषा भिद्यन्ते, पृथिव्यास्तथाभावप्रसङ्ग इत्युक्तं द्वैतवादिना।

भेदमाह * सा च द्विविधा, नित्या अनित्या च * नित्या पृथिवी नीरूपतया अनित्यातो भिद्यतेऽनित्या तु नित्यातश्चेत्यवान्तरभेदादेव भेदः। अथ तेषामपि विशेषान्तराद् भेदाभ्युपगमेऽनवस्थेत्युक्तम्। तदसत्। तत्राप्यसाधारणधर्मस्यासाधारणधर्माद् भेदाभ्युपगमेऽपि जातिगुणक्रियादिरूपतया षट्स्वेवान्तर्भावादनवस्थायामप्यदोषः। व्यावृत्तस्वरूपं पदार्थानां निर्विकल्पकज्ञाने प्रतिभासत इत्युक्तोत्तरमेतत्।

यद् वा लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धेः संशये सति तन्निरासार्थं वाक्यम्। * सा तु द्विविधा * इति। नैकत्वमाकाशस्येव [ इति ] विप्रतिपत्तिनिरासार्थम्।

कार्यलक्षणाया धर्मान्तरं निरूपयति * सा च स्थैर्याद्यवयवसन्निवेशविशिष्टा * इति। स्थिराया भावः स्थैर्यम्, तदादिर्येषां मृदुत्वकठिनत्वादीनां ते स्थैर्यादयस्ते चावयवानां सन्निवेशश्च रचनाविशेषस्तैर्विशिष्टेति।

गुरुत्वविधारकस्यासम्भवात् सर्वदा पतनं क्षितौ विद्यमानमपि पूर्वपरभागादवधारणान्नोपलभ्यत इति दिग्वाससां मतम्, तन्निरस्यते। स्थैर्यपदेन स्थैर्यं स्थिरत्वमपात इति यावत्। यदि पुनः पातः स्याद्, गुरुत्वातिशयेन पातातिशयोपलब्धेः क्षितेरतिशयेन पातादुपरि क्षिप्तस्य लोष्टादेर्भूमिसम्बन्धो न स्यात्। तथाहि, लोष्टस्य यावदुपरि गमनं पुनर्मन्दमागमनं तावत् क्षितेः शीघ्रपातितया योजनशतादिव्यवधानं स्यादिति सम्बन्धाभावः। दृष्टस्तु सम्बन्ध इति ज्ञायते न पतनं क्षितेरिति। अत एव अपतनान्यथानुपपत्त्या ज्ञायते गुरुत्वविधारकं किञ्चिदस्तीति। अन्यथा हि गुरुत्वविधारकाभावे पातोऽवश्यं स्यादिति। स तु न भवतीति प्रतिबन्धोऽनुमीयते। अत्र हि गुरुणो द्रव्यस्य

प्रतिबन्धकत्वे तस्यापि गुरुत्वयोगितया पातः स्यादिति वायोर्महतः प्रतिबन्धकत्वम् । दृष्टं ह्यल्पीयसोऽपि वायोरुपरि पर्णादिव्यवस्थापने गुरुत्वविधारकत्वम् । पृथिवीप्रतिबन्धकस्त्वादिसृष्टावुत्पन्नोऽतिशयेन महान् वायुः पृथिवीमुदकादिसहितां तृणमिव धारयते ।

तथा स्थैर्यम्, पृथिव्या अक्षणिकत्वमिति, क्षणिकत्वापाकरणार्थञ्च स्थैर्यग्रहणम् । यथा च क्षणिकत्वं न सम्भवति तथा वक्ष्याम इति ।

येतु निरवयवामकार्याञ्च पृथिवीं मन्यन्ते तन्निरासार्थमवयवसन्निवेशविशिष्टेति । अवयवा हि भागास्ते क्षितावुपलभ्यन्ते तत्सन्निवेशो रचनाविशेषः प्रत्यक्ष इति । तथावयवसन्निवेशविशिष्टत्वाच्च कार्यत्वम् । तथाहि, पृथिवी कार्या, अवयवसन्निवेशविशिष्टत्वात्, यद् यदवयवसन्निवेशविशिष्टं तत्तत् कार्यं दृष्टम्. यथा घटादि, तथा चावयवसन्निवेशविशिष्टा पृथिवी, तस्मात् कार्येति ।

ननु कार्यत्वेऽप्यवयवसन्निवेशविशिष्टत्वानुपलब्धेर्बुद्ध्यादावित्यप्रयोजकत्वादप्रमाणमिति जैमिनीयाः । तदसत् । सपक्षैकदेशवृत्तेर्गमकत्वाभ्युपगमात् । तथाहि, यद् यदवयवसन्निवेशवत् तत्तत् कार्यं दृष्टम् । न पुनर्यद् यत् कार्यं तत्तदवयवसन्निवेशवदिति ब्रूमः । न च सपक्षैकदेशे वर्त्तमानस्यागमकत्वम्, धूमानुमानस्यागमकत्वप्रसङ्गात् । तथाहि, यदि धूमवत्त्वप्रयुक्तं स्यादग्निमत्त्वम् अन्तरेण धूमवत्त्वमग्निमत्त्वं न भवेदिति । अथ विषमव्याप्तिकत्वाद् यो यो धूमवान् स सोऽग्निमानित्येव व्याप्तिः, न पुनर्यो योऽग्निमान् स स धूमवानित्येवम् । तर्ह्यवयवसन्निवेशवत्त्वस्यापि सपक्षैकदेशे वर्त्तमानस्य नाप्रयोजकत्वम् ।

अथ अभूत्वा भावित्वस्यानुपलब्धेर्न क्षितेः कार्यत्वम् । किमत्र प्रत्यक्षेणानुपलब्धिः ? अथाभूत्वा भावित्वस्यानुमानेन वा ? प्रत्यक्षेणानुपलब्धौ कस्यचिद् घटादौ नोपलभ्यत इत्यकार्यताप्रसङ्गः । अथ तत्राप्यभूत्वा भावित्वमवयवसन्निवेशत्वेन ज्ञायत इति क्षितावप्यवयवसन्निवेशवत्त्वेनैवाभूत्वा भावित्वं गम्यत इति समानम् । कार्यत्वेन च कर्त्तृपूर्वकत्वं गम्यत इति वक्ष्यामो भूतपरीक्षायाम् ।

तथा कार्यलक्षणाया धर्मान्तरमाह * अपरजातिबहुत्वोपेता * इति । अपरा तु जातिः पृथिवीत्वापेक्षया घटत्वपटत्वादिरूपा, तस्या बहुत्वमपरिसंख्यातत्वम्, तदुपेता तद्युक्तेति । न चैवं परमाणुलक्षणेऽतिवैलक्षण्यम् ।

तथा कार्यलक्षणायाः कार्यं निरूपयति * शयनासनादि *। भेदेनानेकमुपकारं करोतीति * अनेकोपकारकरी च *। यदेवार्थक्रियाकारि तदेव परमार्थसत्, अर्थक्रिया-विरहो ह्यभावलक्षणमिति दर्शनस्य सत्तासम्बन्धेन सत्ताभ्युपगमेऽप्यभ्युपगमवादेन निरासार्थं चैतद् भवतीति।

पृथिवीकार्यस्यानन्तत्वादशक्यं तत्परिज्ञानं मा भूदित्यवान्तरभेदेन वैधर्म्यं वीप्सायां प्रतिज्ञातमाह * त्रिविधश्चास्याः कार्यम् * इति। यथा ह्येवंभूतो धर्मः कार्य-परमाणुरूपतया नित्यानित्यभेदः, कार्यरूपायाश्च स्थैर्यादिधर्मयोगोऽपरजातिबहुत्वश्चास्याः पृथिव्यास्तथा त्रिविधश्च कार्यमिति क्षितेः कार्यस्यानन्त्येऽपि शरीरादिरूपेण परस्परं व्यावृत्तात्मतया त्रिविधावस्थितस्य तत्त्वज्ञानविषयत्वम्। तथाहि, शरीरमिन्द्रियं विषय इति संज्ञा यस्य तत् * शरीरेन्द्रियविषयसंज्ञकम् * सर्वं क्षितेः कार्यमिति ज्ञेयम्।

अन्ये त्वस्याः परमाणुलक्षणायास्त्रिविधं कार्यं शरीरादिरूपमिति मन्यन्ते, व्यवहितस्यापि इदंशब्देन क्वचित् परामर्शादिति।

तत्र शरीरस्येतरस्माद् वैधर्म्यमाह * शरीरं द्विविधम् * इति। विशेषस्य सामान्यापेक्षित्वाद् विशेषाभिधानेऽवश्यं सामान्यलक्षणं विद्यमानमन्तेवासिनोह्यतामि-त्यूहनशक्तेः संवर्धनाय न सामान्यलक्षणमवोचत्। तथाहि, शरीराभिधाने शरीरत्वं शरीरव्यवहारकारणं ज्ञायत एव लक्षणमिति। तथेच्छानुविधायिक्रियाश्रयत्वं नर्ते शरीरात् सम्भवतीति शरीरवचनादर्थाल्लभ्यत इति स्वशब्देनावचनम्। ग्रन्थादौ तु शरीरादिद्वारेणेत्यतिव्याप्त्यभावः।

अथ शरीरत्वं सकलशरीरव्यापकत्वाद् भेदान्तराद् व्यावृत्तेश्च युक्तं लक्षणम्। न चैवम् इच्छानुविधायिक्रियाश्रयत्वम्। तस्य हि विपक्षाद् व्यावृत्तस्यापि सतः पक्षे सर्वत्रासम्भवात्। तथाहि, मृताद्यवस्थायामेतन्न सम्भवतीत्यव्यापकम्। अथ जीव-च्छरीरस्यैतल्लक्षणमिति चेत्, तन्न। सुप्तमूर्च्छिताद्यवस्थायामप्यनुपलब्धेः। कथं तर्हीदं लक्षणम्? योग्यताश्रयणात्। तथाहि, शरीरमितरस्माद् भिद्यते साक्षादिच्छानुविधायि-क्रियाश्रययोग्यत्वात् शरीरत्वसम्बन्धाच्च, यस्त्वेवं न भवति न चासौ साक्षादिच्छानु-विधायिक्रियाश्रययोग्यः शरीरत्वयुक्तश्च यथेन्द्रियादिरिति।

आमरणाद् यस्य पटुत्वापटुत्वाभ्यामिन्द्रियाणां पटुत्वापटुत्वे तच्छरीरमिति

केचित्। तथाहि, औषधोपयोगादपीन्द्रियेषु पटुत्वं सम्भवतीत्यामरणादिति पदम्। तथा चाव्याधितस्य शरीरपटुत्वेनामरणमिन्द्रियपटुत्वं दृष्टम्। व्याधितस्य त्वौषधोपयोगेन व्याध्युपशमे शरीरपटुत्वादेवेन्द्रियपटुत्वमिति पश्यामः। शरीरस्यापटुत्वादेवेन्द्रियेषु च काचकामलादिदोषाः सम्भवन्तीति तत्पटुत्वेन व्यावृत्त इति।

पार्थिवन्तु शरीरं मांसाद्यवयवजन्यत्वे सत्यन्त्यावयवित्वादिति द्रष्टव्यम्। मांसाद्यवयवजन्यस्याप्यङ्गुल्यादेः शरीरव्यवहाराविषयत्वादित्यन्त्यावयविपदम्। अन्त्यावयवित्वञ्चाशरीरस्यापि सम्भाव्यत इति मांसाद्यवयवजन्यपदम्।

सामान्यलक्षणलक्षितस्य पार्थिवशरीरस्य विशेषलक्षणार्थं विभागः * शरीरं द्विविधम् *। केन रूपेण? * योनिजमयोनिजञ्च *। पूर्वमुद्दिष्टेऽपि योनिजेऽर्थप्रकाशस्य विवक्षितत्वादयोनिजमाह * तत्रायोनिजम् * इति। योनिशब्दस्य कारणपर्यायत्वात् तन्निषेधे मा भूदाकस्मिकमित्याह * अनपेक्षशुक्रशोणितम् * इति। योनिशब्द सामान्यशब्दोऽपि कारणविशेषे शुक्रशोणितलक्षणे विवक्षित इति तन्निषेधेन कारणान्तरं लभ्यते। शुक्रशोणितमनपेक्ष्य कारणान्तरादुत्पन्नमयोनिजम्। केषाम्? * देवर्षीणां शरीरम् * इति। अयोनिजन्तु शरीरं देवर्षीणाम्, नत्वयोनिजमेव योनिजत्वस्यापि श्रवणात्।

अन्ये तु व्यभिचारनिषेधार्थमेकस्य देवपदस्य लोपेन समासं कुर्वते। देवाश्च देवर्षयश्च देवर्षयस्तेषामिति। अत्र देवास्त्वष्टधा पिशाचादयः। तत्रापि कस्यचिद् योनिजत्वश्रवणेऽन्यद् विशेषणं न चिन्त्यम्।

अथ केभ्यस्तच्छरीरं भवतीत्याह * धर्मविशेषसहितेभ्योऽणुभ्यो जायते * इति। तथाहि, तच्छरीरोत्पत्तावणवः समवायिकारणम्, तत्संयोगश्चासमवायिकारणम्, धर्मविशेषो निमित्तकारणमिति। कार्यकार्थसमवायश्च द्रव्योत्पत्तौ संयोगस्येति।

अथ देवर्षीणामयोनिजं शरीरमस्तीत्यत्र किं प्रमाणम्? आगमः। तथा च—

अयोनिजशरीराणि भवन्त्यद्भुतकर्मणाम्।
योनिजान्येव मौद्गल्य! न मातापितृजानि तु॥ [ ? ]

तथा ह्यद्भुतमुत्कृष्टं कर्म येषां ते तथोक्तास्तेषामुत्कृष्टकर्मवशाद्योनिजानि शरीराणि भवन्ति। कारणमात्रनिषेधो मा भूदित्याह योनिजानि कारणजानि एव। कथं तर्हि

तेषामयोनिजत्वमित्याह न मातापितृजानीति। पितृमातृशब्देन शोणितशुक्रयोरभिधानमुपचारेणेति। तथोत्कृष्टं कर्म द्वेधा धर्मरूपमधर्मरूपञ्चेति। तत्र धर्मरूपाद् देवर्षीणामधर्मरूपाच्च क्षुद्रजन्तुयातनाशरीराणि। क्षुद्रजन्तवो यूकादयः। यातनाशरीराणि नारकीयशरीराणीति। तान्यधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते। अथ देवर्षीणां शरीराणि धर्मविशेषादुपजातान्यप्यनुमानेन योनिजानीति प्रतीयन्ते। तथाहि, देवर्षिशरीराणि योनिजानि शरीरत्वादस्मदादिशरीरवदिति। तच्चागमेन बाध्यमानत्वादप्रमाणमिति। तथा अनुमानेन चागमस्य बाधाद् देवर्षिशरीराणां सद्भावासिद्धेर्निजानुमानस्याश्रयासिद्धत्वादप्रमाणत्वप्रसङ्गः।

न चानुमानस्यागमविषये तदुपघातेन प्रमाणता सम्भवति। युक्तश्चागमानुग्राहकत्वम्। तथाहि: देवर्षिशरीराण्ययोनिजानि, उत्कृष्टकर्मारब्धत्वाच्छरभादिशरीरवत्। उत्कृष्टं कर्माधर्मरूपं शरभादिशरीरे, देवर्षिशरीरे तु धर्मरूपमिति विशेषेऽप्युत्कृष्टकर्मारब्धत्वमुभयत्राविशिष्टमिति न साधनहीनमुदाहरणम्।

योनिजमाह *शुक्रशोणितसम्पातजम्* इति। शुक्रशोणितयोः सन्निपातात् सम्बन्धाज्जायत इति। शुक्रं पितुर्मातुः शोणितमिति। तयोः सन्निपातसमकालं भोक्तुः कर्मवशादन्तःकरणसम्बन्धः। शुक्रशोणितयोः संयोगान्मज्जिताकारं द्रव्यमुत्पन्नं × × × × तद [न] न्तरमान्तरेण तेजसा सम्बन्धाद् वेगापेक्षादवयवे क्रिया, तदनन्तरं विभागाद् द्रव्यारम्भकसंयोगविनाशः, तद्विनाशात्तदारब्धस्य द्रव्यस्य विनाशः। पुनरन्यस्मादग्निसंयोगात् पूर्वरूपादयो व्यावर्तन्ते। अन्यस्माच्चापूर्वरूपाद्युत्पत्तिरेवमुत्पन्नपाकजेष्वणुष्वात्माणुसंयोगाददृष्टापेक्षादुत्पन्ना क्रिया विभागमारभते। तस्मात्पूर्वसंयोगव्यावृत्तादुत्तरसंयोगाद् द्व्यणुकोत्पत्तिरेवं द्व्यणुकैस्त्र्यणुकोत्पत्तिरित्यादिक्रमेण शरीरोत्पत्तिरिति। पुनर्मात्रा भुक्तं पीतं तन्मात्रयावतार्यते ततः पुनरान्तरान [लेन] च सम्बन्धादवयवे क्रिया। पुनर्विभागात् संयोगविनाशस्ततो द्रव्यविनाशः। अन्यस्मादग्निसंयोगात् पूर्वरूपादिविनाशोऽन्यस्माच्च रक्ताद्युत्पत्तिः। ततो द्व्यणुकादिप्रक्रमेण शरीरोत्पत्तिरिति न्यायः। शरीरेऽप्येतल्लक्षणं द्रष्टव्यं यावद्भस्मीभाव इति। अन्यथा हि आहारोपयोगस्याश्रयोपचयाकारणत्वाद् वैयर्थ्यं स्यात्।

न चारब्धशरीरा ये वावयवाः सहकारिप्राप्तौ शरीरान्तरमारभन्ते पुनः सहकार्यन्तरप्राप्तावन्यच्छरीरमिति वाच्यम्। आरभ्यारम्भकवादप्रसङ्गात्। अथेष्यते

वैकं द्रव्यमारभ्य तस्मिन्नविनष्टे पुनर्द्रव्यान्तरारम्भकत्वम्। न युक्तमेतत्। सर्वस्यापि कार्यद्रव्यस्य परमाणुवृत्तित्वप्रसङ्गात्। तथाहि, परमाणुभ्यां द्व्यणुकमारब्धं तस्मिन्नविनष्टे ताभ्यामेवान्यपरमाणुसहिताभ्यामन्यदारब्धम्। पुनरन्यपरमाणुसहितै-रन्यदारभ्यत इति मूर्त्तानां समानदेशताप्रसङ्गः। तथाहि, परमाणुभ्यामारब्धं परमाण्वोर्वर्त्तते पुनरन्यसहिताभ्यामारब्धं तयोस्तस्मिंश्चेति मूर्त्तानामेकदेशत्वं स्यात्। तेषान्तु परस्परव्यतिरिक्ताधारसमवायित्वं दृष्टम्। यत्र ह्येकं मूर्त्तं समवेतं न तत्रान्यत् समवैति।

अथैकदेशतापरिहारार्थं परमाणुभ्यामन्यसहकारिभ्यामारब्धमेकस्मिन्नेव परमाणौ वर्त्तते, पुनरन्यसहितैस्तैरारब्धमेकस्मिन्नेवेत्युच्यते। एवमप्येकस्मिन् द्रव्ये वर्त्तमानं कार्यद्रव्यं कारणविभागाभावादविनाशि स्यात्। तथा अद्रव्यं द्रव्यम्, अनेक-द्रव्यञ्च द्रव्यमिति वचनव्याघातः। तथा हि न विद्यते जन्यं जनकञ्च द्रव्यमित्यद्रव्यम्। परमाणूनां जनकं नास्ति। आकाशादीनां जन्यं नापि जनकमित्यद्रव्यं नित्यद्रव्यमिति यावत्। अनेकद्रव्यन्त्वनेकद्रव्यं जनकमस्येत्यनेन स्वरूपेण। द्विविधमेव द्रव्यम्, अद्रव्यं नित्यम् अनेकद्रव्यं जन्यं कार्यमिति। एकद्रव्यस्य च कार्यद्रव्यस्याभ्युपगमे व्याहतमेतद् भवतीति।

न चैकस्य क्रमयौगपद्याभ्यामारम्भकत्वं न्याय्यम्। एकस्वरूपतया यावत्कर्त्तव्यं तावदेकस्मिन् काले कुर्यादशेषकार्योत्पत्तौ समर्थस्यान्यानपेक्षितत्वादिति। युगपदशेष-कार्यं कृत्वा पुनरकरणे हेतुर्नास्तीति।

अथ पूर्वमारब्धं कार्यद्रव्यमवेक्ष्यारभन्ते तर्हि पूर्वस्यारब्धकार्यस्यापि समवायित्वे कथमेकस्मिन्नेव द्रव्ये वर्त्तते? पूर्वस्मिन् स्ववृत्तावनेकं दूषणमभ्यूह्यं समानासमान-जातीययोरारम्भकत्वासम्भवादित्यादि। तथा सर्वस्यापि कार्यद्रव्यस्य परमाणुवृत्तिता-यामिह तन्तुषु पटः, इह वीरणेषु कट इत्यादि प्रयोगो न स्यात्, तन्त्वादेः समवायित्वा-भावादिति। कार्यद्रव्यस्य विनाशे चान्तरकार्यस्यानुत्पन्नत्वादुपलम्भाभावः।

अथ परमाणुभिः पूर्वपूर्वस्य कार्यस्याविनाशे सत्युत्तरोत्तरकार्यारम्भादनेकं कार्यद्रव्यमित्यन्त्यस्य विनाशे पूर्वपूर्वस्यावस्थानादनेककार्योपलम्भ इति चेत्। नन्वेवं तर्हि कपालसंयोगविनाशेऽपि घटस्याविनाशप्रसङ्गः। तदवयवतदवयवसंयोगविनाशे

च तदवयवतदवयवानां तेषां समवायित्वाभावेन तत्संयोगस्यासमवायित्वाभावादिति। समवायिकारणविनाशेनासमवायिकारणविनाशेन वा द्रव्यस्य विनाशदर्शनात्।

अथ परमाणावुत्पन्ना क्रिया संयोगविनाशद्वारेण द्रव्यविनाशिकेष्यते। तत्र यद्याद्यद्रव्यारम्भके परमाणावुत्पन्ना क्रिया विभागात् संयोगविनाशे सति द्रव्यं विनाशयेत् तर्हि पूर्वपूर्वसंयोगस्योत्तरोत्तरसंयोगसहकारितया शेषकार्योत्पत्तावसमवायिकारणत्वाभ्युपगमात् तद्विनाशेऽवश्यं सकलकार्यविनाश इति न किञ्चित् कार्यमुपलभ्येत।

अथान्त्यपरमाणुसंयोगस्य पूर्वपूर्वपरमाणुसंयोगोपचितस्यैककार्योत्पत्तावसमवायिकारणत्वमिति। तद्विनाशे तदारब्धस्यैव विनाशादवान्तरकार्यस्योपलम्भ एवेति चेत्। नन्वेवमपि परमाणुसंयोगस्य विनाशादुपजातो घटादिनाशोऽस्मदादेरतीन्द्रियः स्यात्। यथा ह्यापाकनिक्षिप्तेषु घटेष्वग्निसंयोगाद् विनाशः परमाणुक्रियाद्वारेणेति। प्रत्यक्षश्च कपालसंयोगविनाशाद् घटस्य विनाशस्तेन ज्ञायते कपालानां समवायित्वमित्यलमतिविस्तरेण।

अतः शरीरे प्रतिक्षणमाहारोपयोगानुपयोगे सत्युपचयापचयप्रपञ्चदर्शनात् पूर्वद्रव्यनिमित्तादुत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण चोत्पत्तिर्वाच्येति। यथा च परमाणुषु पाको द्व्यणुकादिप्रक्रमेण चोत्पत्तिस्तथा वक्ष्यामः पाकजोत्पत्ताविति।

इदानीं शुक्रशोणितसन्निपातजस्याप्यवान्तरवैधर्म्यमाह * तद् द्विविधं जरायुमण्डजञ्च * इति। तथाहि, शरीरं गर्भे प्रतिक्षणं पाकजोत्पत्तिन्यायेनोत्पद्यमानं निष्क्रमणकाले जरायुणा वेष्टितत्वाज्जरायुजम्। अण्डजं मातृशरीरान्निःसृतमपि किञ्चित्कालमण्डोदरे पाकजोत्पत्तिन्यायेनावेष्टितमुत्पद्यत इत्यण्डजम्। केषां जरायुजमित्याह * मानुषपशुमृगाणाम् * इति। मानुषाश्च पशवश्च मृगाश्चेति। पशुशब्देन संगृहीतानामपि मृगशब्देनाभिधानम् अरण्यजत्वादिति।

अन्ये त्वेकस्य मानुषशब्दस्य लोपेन समासं कुर्वते। मानुषाश्च मानुषपशवश्च मृगाश्चेति। अत्र मानुषशब्देनाभिहितानां पशुशब्देनाभिधानेन तदेव दूषणमिति प्रयोजनञ्च चिन्त्यम्। तथा मृगशब्देन सर्वपशूनामभिधानासम्भवादव्याप्तिरिति।

अण्डजं केषामित्याह * पक्षिसरीसृपाणाम् * इति। पक्षिणश्च सरीसृपाश्चेति पक्षिसरीसृपाः, तेषामिति। सरीसृपाः कुटिलं सर्पन्तीति सर्पादयो रूढिवशाच्चेति।

शरीरस्य शरीरात् समानजातीयाच्च वैधर्म्यमभिधाय इन्द्रियस्य वैधर्म्यनिरूपणार्थमाह *इन्द्रियं गन्धव्यञ्जकम्* इति। तथेन्द्रियाणां नानात्वात् तद्व्यापि सामान्यलक्षणमर्थाल्लभ्यत एव। करणत्वातीन्द्रियत्वद्रव्यत्वनियताधिष्ठानवृत्तित्वे सत्यपरोक्षज्ञानजनकत्वादिति। अपरोक्षज्ञानजनकत्वं कर्त्तुरात्मनः संभवतीति तन्निरासाय करणत्वग्रहणम्। अनिन्द्रियस्य प्रदीपादेः करणत्वे सत्यपरोक्षज्ञानजनकत्वं दृष्टमिति तन्निराकरणार्थमतीन्द्रियपदम्। तथेन्द्रियार्थसन्निकर्षः करणत्वातीन्द्रियत्वे सत्यपरोक्षज्ञानजनक इति द्रव्यत्वपदम्। तथा दिक्कालयोः सर्वोत्पत्तिमतां निमित्तत्वात् करणत्वातीन्द्रियत्वद्रव्यत्वे सत्यपरोक्षज्ञानजनकत्वमस्तीति नियताधिष्ठानवृत्तित्वपदम्। दिक्कालयोस्तु व्यापकत्वेन सकलकार्यजनकत्वेन नियताधिष्ठानासम्भवात्। अथात्मापि व्यापकत्वादनेन विशेषणेन व्यवच्छिन्न इति व्यर्थं करणत्वपदम्। न। व्यापकस्यापि भोक्तृत्वेन शरीराधिष्ठानत्वात्। अत इन्द्रियमितरस्माद् भिद्यते करणत्वातीन्द्रियत्वद्रव्यत्वनियताधिष्ठानवृत्तित्वे सत्यपरोक्षज्ञानजनकत्वात्, यस्तु न भिद्यते न चासावुक्तसाधनो यथा शरीरादिरिति।

सामान्यलक्षणलक्षितस्य समानजातीयाद् भेदमाह *इन्द्रियं घ्राणम्* इन्द्रियसामान्यलक्षणलक्षितत्वे सति गन्धव्यञ्जकत्वादितरेभ्यो भिद्यते। तथेन्द्रियं गन्धव्यञ्जकमिति कार्येण सद्भावं दर्शयति। तथाहि, गन्धोपलब्धिः, करणकार्या, क्रियात्वात्, या या क्रिया सा सा करणकार्या दृष्टा यथा च्छिदिक्रिया, तथा चेयं क्रिया, तस्मात् करणकार्येति।

यच्च गन्धोपलब्धिसम्पादकं करणं तद् घ्राणम्, तच्च पार्थिवम्, रूपरसगन्धस्पर्शेषु मध्ये नियमेन गन्धव्यञ्जकत्वात्, यद् यद् रूपादिषु मध्ये नियमेन गन्धव्यञ्जकं तत्तत् पार्थिवं दृष्टं यथा कस्तूरिकादिद्रव्यम्, तथा च घ्राणं रूपादिषु मध्ये नियमेन गन्धप्रकाशकम्, तस्मात् पार्थिवमिति। ननु नियमेन गन्धव्यञ्जकत्वमसिद्धं गन्धत्वगुणत्वसत्तादेरपि व्यञ्जकत्वादित्यतो रूपरसगन्धस्पर्शेषु मध्य इति विशेषणम्।

अथ पार्थिवत्वाविशेषाद् घ्राणं गन्धस्येव रूपादिप्रकाशकमपि स्याद् रूपादेरपि पार्थिवगुणत्वात्, संयुक्तसमवायस्य च सम्बन्धस्याविशेषाद्, अन्यस्य च विशेषहेतोरभावाद् इत्यत आह *जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम्*। अतो गन्धस्यैव प्रकाशकमिति। कथमेतज्ज्ञायते किञ्चिज्जलादिना सम्पृक्तैरनभिभूतैः पार्थिवावयवै-

रारम्भो घ्राणस्येति ? कार्यनियमात्। तथा घ्राणस्य व्यापाराद् गन्धस्यैवोपलम्भो न रूपादेरिति दृष्टम्। न च कारणनियमं विना कार्यनियमः सम्भवतीति किञ्चिज्जलाद्यसम्पृक्तैरुत्पादो ज्ञायते चादृष्टविशेषाद् गन्धोपलब्धेः सम्पादकात्। अन्यथा हि घ्राणव्यापाराद् गन्धस्यैवोपलब्धिर्न भवेत्। सा च दृष्टा। अतो ज्ञायतेऽन्यस्य कारणत्वासम्भवाद् विशिष्टोत्पादो निमित्तम्। स चादृष्टवशात्। अदृष्टस्य च व्यवस्थाकारणत्वादिति। अभिप्रेतञ्चैतत् सूत्रकर्त्तुरिति।

"भूयस्त्वाद् गन्धवत्त्वाच्च गन्धज्ञाने प्रकृतिः पृथिवी" ( वै० सू० ८।२।५ ) इति वचनाद् गन्धो ज्ञायतेऽनेनेति गन्धज्ञानं घ्राणम्। तस्मिन्नुत्पाद्ये प्रकृतिः कारणं पृथिवी भूयस्त्वान्निमित्तादिति।

यथा भूयसां पार्थिवावयवानां गन्धोपलब्धिसम्पादकादृष्टविशेषोपगृहीतानां जलादिना चातिरस्कृतवपुषां घ्राणजनकत्वं नियमेन गन्धोपलब्धेर्ज्ञायते, भूयसाञ्च पार्थिवावयवानां कारणत्वाभिधानादल्पीयसामपि जलाद्यवयवानामकारणत्वं लब्धम्। अत एव तेषां पार्थिवावयवानामभिभावकत्वम्। तथा न परं विशिष्टादृष्टोपग्रहे सतीषज्जलावयवादिसम्पृक्तैरारम्भाद् गन्धस्यैव प्रकाशकत्वं गन्धवत्त्वाच्चेति। पार्थिवत्वाद् घ्राणस्य रूपादिमत्त्वमपि सम्भवतीति गन्धवत्त्वमुत्कर्षो विवक्षितः। स्वगतगन्धोत्कर्षाच्च रूपादिषु च मध्ये संयुक्तसमवायाविशेषेऽपि गन्धस्यैव प्रकाशकमिति।

यदि वा काचिदेव पृथिवी गन्धोपलब्धेः कारणम्, न सर्वेति विशेषहेतुर्नास्तीत्युक्ते वाक्यं संबध्यते "भूयस्त्वाद् गन्धवत्त्वाच्च गन्धज्ञाने प्रकृतिरिति" ( वै० सू० ८।२।५ )। गन्धे ज्ञप्तिः ज्ञानं गन्धविषयकज्ञानं तस्मिन् प्रकृतिः कारणं पृथिवी भूयस्त्वाद् व्याकृताद् गन्धवत्त्वाच्चेति।

अन्यो वार्थः। गन्धवत्त्वान्नियमेन गन्धोपलब्धेः कारणम्। विशेषहेतुर्नास्तीत्युक्ते वाक्यं संबध्यं घ्राणम्, तच्च गन्धवत् पार्थिवत्वाविशेषात्। घ्राणं कुत इत्याह भूयस्त्वादुक्तरूपादिति।

अन्ये तु जलाद्यसम्पृक्तैः शुद्धैः पार्थिवावयवैरारम्भो विशिष्टादृष्टापेक्षैः भूयस्त्वमिति मन्यन्ते। तथा च भाष्यम् "जलाद्यनभिभूतैरसम्पृक्तैः केवलैः पार्थिवावयवैरारब्धं

घ्राणमिति। अत्र चेषज्जलादिसम्पर्केऽप्यनभिभवस्य सम्भवादसंपृक्तैरिति विशेषणं न बुध्यामहे। न च भूयसां भावो भूयस्त्वमित्युक्तेऽन्येषामत्यन्तासम्भव उपलभ्यत इत्यलम्।

इन्द्रियं सर्वप्राणिनां गन्धव्यञ्जकमिति सामान्यविशेषात्मतयाभिधाय विषयस्वरूपनिरूपणार्थमाह * विषयस्तु द्व्यणुकादिप्रक्रमेणारब्धः * इति। ननु द्व्यणुकादिप्रक्रमेणारम्भः शरीरस्येन्द्रियस्य चास्तीत्यतिव्यापीदं विषयलक्षणमिति। नैतदेवम्। शरीरेन्द्रिययोर्लक्षणाभिधानेन विषयाद् भेदसिद्धौ तदन्यत्वे सतीति विशेषणलाभात्। तथाहि, शरीरेन्द्रियान्यत्वे सति द्व्यणुकादिप्रक्रमेणारब्धत्वाद् विषयस्तस्य हि विषयभावोपकारकत्वात्। विषयस्तूपभोग्य इन्द्रियग्राह्यो वास्मदादेः।

अथ त्र्यणुकं द्व्यणुकादिप्रक्रमेणोत्पन्नं शरीरेन्द्रियान्यत्वे सत्यस्मदादीन्द्रिय ग्राह्यञ्च न भवति (इति), अव्यापीदं विषयलक्षणमिति। द्व्यणुकादिप्रक्रमेणारब्ध इति विशेषणेन व्यवच्छेदात्। तथाहि, द्व्यणुकमादिर्यस्य प्रक्रमस्येत्यादिग्रहण त्र्यणुकस्याप्यवरोधकमिति। असौ द्व्यणुकादिः स चासौ प्रक्रमश्चेति तेनारब्धो विषयो द्व्यणुकत्र्यणुकादिप्रक्रमेणारब्ध इति यावत्। त्र्यणुकन्तु द्व्यणुकैरारब्धं द्व्यणुकादिप्रक्रमेणेति। त्र्यणुकानान्त्वनियमेनारम्भकत्वं द्वयोर्बहूनाञ्चेति। तदारब्धस्येन्द्रियविषयता सम्भाव्यत इति।

विषयस्य च सामान्यलक्षणलक्षितस्याप्यवान्तरभेदेनानन्त्यात् संग्रहमाह- * त्रिविधः *। केन रूपेण ? * मृत्पाषाणस्थावरलक्षणः * इति। मृच्च पाषाणश्च स्थावराश्चेति लक्षणं स्वभावो यस्यासौ तथोक्तः। स्वभावस्तु मृदि मृत्त्वं पाषाणेषु पाषाणत्वमिति।

ननु मृदादिभेदेन त्रैविध्यमनुपपन्नम् इष्टकादेर्विषयस्यासंग्रहादित्याशङ्क्याह तत्र प्राकाराश्चेष्टकाश्च तदादयो घटादयस्ते च मृद्विकारा इति मृच्छब्देन संगृहीताः। विकारस्तु विशिष्टरचनापन्नाया मृदोऽग्निसम्बन्धात् परमाणुक्रियाद्वारेण पूर्वद्रव्यविनाशे श्यामादिनिवृत्तावुत्पन्नपाकजैरारम्भादित्युच्यन्ते। तैरुत्पन्नपाकजैरारब्धेऽपि मृत्त्वं सामान्यं न निवर्त्तत इति मृच्छब्देनाभिधीयन्त इति। पाषाणत्वसामान्ययोगिनो दर्शयति * पाषाणा उपलमणिवज्रादयः * इति। तेषाञ्च स्वरूपं तच्छास्त्रप्रसिद्धलोक-

व्यवहारतोऽवगन्तव्यम्। स्थावरत्वजातिसम्बन्धिनो दर्शयति * स्थावरास्तृणौषधिवृक्षगुल्मलतावितानवनस्पतय इति *। तृणमुभयवादिप्रसिद्धम्। ओषधयः फलपाकान्ता धान्यादयः। वृक्षाश्च वृक्षत्वजातिसम्बन्धिनोऽशोकादयः। एवं गुल्मलतावितानादिविशेषोऽवगन्तव्यः। तदुक्तम्,

ओषध्यः फलपाकान्ता लतागुल्माश्च वीरुधः।
फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः॥ (?) इति।

**अप्त्वाभिसम्बन्धादापः। रूपरसस्पर्शद्रवत्वस्नेहसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वसंस्कारवत्यश्च। एते च पूर्ववत् सिद्धाः। शुक्लमधुरशीता एव रूपरसस्पर्शाः। स्नेहोऽम्भस्येव सांसिद्धिकं द्रवत्वञ्च। तास्तु पूर्ववद् द्विविधा नित्यानित्यभावात्। कार्यं पुनस्त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्। शरीरमयोनिजमेव धर्मविशेषसहितेभ्य आप्येभ्यः परमाणुभ्यो जायते वरुणलोके। पार्थिवावयवोपष्टम्भादुपभोगसमर्थम्। इन्द्रियं सर्वप्राणिनां रसोपलम्भकमन्यावयवानभिभूतैर्जलावयवैरारब्धं रसनम्। विषयस्तु सरित्समुद्रहिमकरकादिरिति।**

इदानीमुद्देशवत उदकस्य लक्षणपरीक्षार्थमाह * अप्त्वाभिसम्बन्धात् * इत्यादिप्रकरणम्। अप्त्वेनाभिसम्बन्धोऽप्त्वेनाभिलक्षितः सम्बन्धः समवायो लक्षणमिति। तथा ह्याप इतरस्माद् भिद्यन्तेऽप्त्वाभिसम्बन्धात्, ये तु न भिद्यन्ते न ते अप्त्वाभिसम्बद्धाः यथा क्षित्यादयः, न च तथापः, तस्माद् भिद्यन्त इति। व्यवहारो वा साध्यते, विवादास्पदीभूतद्रव्यमाप (द्रव्यं) इत्येवं व्यवहर्त्तव्यमप्त्वाभिसम्बन्धात्। ये त्वाप इत्येवं न व्यवह्रियन्ते न तेऽप्त्वाभिसम्बद्धाः। यथा क्षित्यादयः। न तथेदम्, तस्मादाप इत्येवं व्यवहर्त्तव्यमिति। शेषञ्च लक्षणस्याक्षेपप्रतिसमाधानं पृथिव्यधिकारे ज्ञेयम्। एवं शब्दार्थनिरूपणाय शक्तेरतीन्द्रियत्वप्रतिषेधार्थञ्चाप्त्वाभिम्बन्धादिति वाक्यं पूर्ववद्योजनीयम्।

पूर्वं हि पृथिव्यादीनां नवानामपि समवायिकारणत्वं गुणत्वं क्षित्युदकात्मनां चतुर्दशगुणवत्त्वञ्चेत्युक्तम्। तत्र केषामुत्पत्तौ समवायिकारणत्वम्, कैर्गुणैर्गुणवत्त्वम्,

के वा चतुर्दश गुणाः, किं वा गुणात्मकं लक्षणमित्याह रूपरसस्पर्शस्नेहसांसिद्धिक-द्रवत्वादिसंस्कारपर्यन्ता विद्यन्ते यासां तास्तद्वत्य इति ।

* एते च पूर्ववत् * इति गुणविनिवेशाधिकारे सिद्धाः। तथाहि, रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च ( वै० सू० २।१।२ ) इति पञ्चविशेषणाः सिद्धाः। ते चासाधारणत्वादितरस्माद् भेदका इत्यसाधारणताप्रतिपादनार्थमाह * शुक्लमधुरशीता एव रूपरसस्पर्शाः *। सूत्रेण सामान्यशब्देनाप्यर्थादभिहिता इति। तथाहि, शुक्लमेव हि रूपमभास्वरमप्सु, मधुर एव रसः, शीत एव स्पर्श इति ।

तथा स्नेहोऽम्भस्येव सांसिद्धिकञ्च द्रवत्वमम्भस्येवेत्यसाधारणत्वमेषाम्। सांसिद्धिक-मित्यग्निसंयोगानपेक्षम्, न त्वाकस्मिकम्, कार्ये कारणगुणपूर्वकं परमाणुषु च नित्यमिति । संख्यादयस्तु पूर्ववद् व्याख्येयाः ।

एवं लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निराकरणार्थम् अप्त्वसामान्यस्य च भेदाधिष्ठानत्वादिति तत्समर्थनार्थम्, अद्वैतवादी चोदकस्योदकान्तराद् भेदं न प्रत्येति तन्निराकरणार्थं सर्वस्य कार्यद्रव्यस्य विनाशे प्रलयावस्थायाञ्च सर्गादौ पुनरुत्पत्तिर्न स्यादभावाद् भावोत्पत्तेरयोगादिति बीजप्रतिपादनार्थञ्च * तास्तु पूर्ववद् द्विविधाः * इति वाक्यं व्याख्येयम्। यथा हि पृथिवी परमाणुस्वभावा नित्या कार्यलक्षणा त्वनित्या तद्वदापोऽपीत्याह * नित्यानित्यभावात् * इति । नित्यत्वादनित्यत्वाच्चेत्यनेन रूपेण द्वैविध्यमित्यवान्तरभेदेन वैधर्म्यं दर्शयति । कार्यन्तु सत्यप्यानन्त्ये त्रिविधमिति ज्ञेयम् । केन रूपेणेत्याह शरीरमिन्द्रियं विषय इति संज्ञा यस्य तत्तथोक्तम् ।

शरीरस्य च सामान्यलक्षणं पूर्वोक्तमित्युत्पत्तिरेवोच्यते * शरीरमयोनिजमेव * इति । न शुक्रशोणितसन्निपातजमिति । तच्च *धर्मविशेषसहितेभ्य आप्येभ्यः परमाणुभ्यो जायते वरुणलोके * प्रसिद्धमागमादिति। अथाप्यं शरीरं द्रवत्वाधिकरणतया न विशिष्टोप-भोगाय कल्प्यत इत्याह * पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् * इति । तथा ह्याप्यावयवाः समवायिकारणम्, तत्संयोगाश्चासमवायिकारणम्, पार्थिवावयवाश्च निमित्तकारणमिति। एवं तैजसा वायवीयाश्चेति ।

ननु चायुक्तमेतत्, शरीरस्य पाञ्चभौतिकत्वश्रवणात्। तथाहि, "गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्" ( न्या. सू. ३।२।३१ ) इति।

गन्धोपलब्धेः क्षितेः कारणत्वम्, क्लेदाच्चापाम्, पाकात्तेजसः, व्यूहाच्च रचनाविशेषाद् वायोरवकाशदातृत्वेन चाकाशस्येति पाञ्चभौतिकत्वमिति। तच्चासत्। विभिन्नजातीयानामेकद्रव्योत्पत्तौ समवायित्वस्यादर्शनात्। न च विभिन्नजातीयावयवेषु समवेतं शरीरमुपलभ्यते। यदि च पञ्चानां समवायित्वं स्यादेवञ्च सत्येभ्यः कः पार्थिवोऽन्यस्त्वाप्यस्तैजसवायवीयास्तेषु समवेतं शरीरमुपलभ्येत, न चैवम्। तथा विचित्रगुणाधिकरणत्वात् समवायिकारणानां कार्येऽपि तद्वैचित्र्यं स्यात्। एवञ्च सति पार्थिवावयवे शुक्लादीनामन्यतमं रूपम्, पाकजस्पर्शः स्यात्। आप्यावयवे च शुक्लमेव रूपम्, शीत एव स्पर्शः स्यात्। तैजसे भास्वरं रूपमुष्ण एव स्पर्शः, वायवीये चानुष्णाशीतत्वे सत्यपाकजस्पर्शः स्यादिति। विचित्रावयवैरारब्धत्वाच्छरीरं वैचित्र्यमुपलभ्येत। न तूपलभ्यते। तस्मादयुक्तमेतत्।

अथावयवस्याप्यनेकभूतैरारम्भः। तथाहि, पार्थिवाप्याभ्यां परमाणुभ्यां द्व्यणुकम्, पुनराप्यतैजसाभ्याम्, तथा तैजसवायवीयाभ्यामारब्धमिति। एवं वायुशब्दतन्मात्राभ्याम्। एतानि द्व्यणुकान्युत्पन्नानि त्र्यणुकादिप्रक्रमेण शरीरमारभन्त इत्यभ्युपगमे च रूपादीनामुत्पत्तिर्न भवेत्। तथाहि "गुणाश्च गुणान्तरमारभन्ते" (वै. सू. १।१।१० ) इति सूत्रेणानेकस्य गुणस्य गुणारम्भकत्वमुक्तम्। एवञ्च सति पार्थिवाप्याभ्यामणुभ्यामारब्धे द्व्यणुके गन्धोत्पत्तिर्न स्यात्। तस्य ह्येकत्वेनाजनकत्वात्। एवमाप्यतैजसाभ्यामारब्धे द्व्यणुके रसो न स्यात्। तथा तैजसवायवीयाभ्यामारब्धे द्व्यणुके रूपाभावः। तथा वायुशब्दतन्मात्राभ्यामारब्धे स्पर्शाभाव इति। तदेवं गन्धरसरूपस्पर्शानां द्व्यणुकेष्वभावे तत्कार्यकार्येष्वप्यभावादिति शरीरेऽप्यभावप्रसङ्गः।

एतच्च द्व्यात्मकादिष्वपि समानम्। तथाहि, पार्थिवाप्याभ्यामारब्धे शरीरे गन्धानुत्पत्तिः। पार्थिवतैजसाभ्यामारब्धे गन्धरसानुत्पत्तिः। पार्थिववायवीयाभ्यामारब्धे शरीरे गन्धरसरूपानुत्पत्तिः। एवं पार्थिवाकाशाभ्यामारब्धे चतुर्णामनुत्पत्तिरिति।

न च द्रव्यारम्भकत्वमाकाशस्यामूर्तत्वादिति। मूर्तस्य हि स्पर्शवतो द्रव्यस्य द्रव्यारम्भकत्वदर्शनात्। एवमण्वादेरपीतरसहकारित्वेनारम्भे दूषणमूह्यम्।

तथा त्रयाणां पृथिव्यादीनां चतुर्णाञ्चारम्भ इति पञ्चानाञ्च कारणत्वमिष्यत इति पाञ्चभौतिकत्वमिष्टम्। समवायित्वञ्चैकस्यैवेति। पार्थिवे हि शरीरे पार्थिवस्यान्यस्मिन्नन्यस्येति। पार्थिवे च क्लेदोपलम्भः संयुक्तसमवायेन। पाकस्त्वान्तरानलसंयोगात्, स च नोपलभ्यत एवेन्द्रियेण शरीरे सर्वदा। केवलन्तु गुणान्तरप्रादुर्भावात् पूर्वशरीरनिवृत्तावुत्पन्नपाकजैरारम्भः कल्प्यते। व्यूहस्त्ववयवरचनाविशेषः। स तु वायुकार्यो न भवत्येत्र। अवकाशदातृत्वञ्च मूर्तद्रव्याभावस्यैवेत्याकाशस्य न लिङ्गमित्यलम्।

इन्द्रियस्वरूपनिरूपणार्थमाह * इन्द्रियञ्च रसव्यञ्जकम् * इति। रसोपलब्धिः करणकार्या, क्रियात्वात्, या या क्रिया सा सा करणकार्या यथा छिदिक्रिया, तथा चेयं क्रिया, तस्मात् करणकार्येति। यच्च रसोपलब्धिसम्पादकं करणं तदाप्यम्, तद्रसनम्, रूपरसादिषु मध्ये नियमेन रसव्यञ्जकत्वात्। यद् यद् रूपादिषु मध्ये नियमेन रसव्यञ्जकं तत्तदाप्यं दृष्टं यथा दन्तान्तर्गतोदकम्, तथा चैतत्, तस्मादाप्यमिति। रसनव्यापाराद् रसत्वादीनामपि ग्रहणस्य सम्भवादसम्भवित्वं स्यादिति रूपादिषु मध्ये इति पदम्। तथाहि, शुष्ककण्ठस्य मोदकादिषु रसोपलब्धिर्नोपलब्धा। उदकसद्भावे तु रूपादिषु मध्ये रसस्यैकस्योपलब्धिरिति सपक्षे सत्त्वम्। अनाप्ये चैतन्न सम्भवतीति विपक्षाद् व्यावृत्तिरिति। तदेतदसाधारणत्वादितरस्माद् भेदकमपीति ज्ञेयम्।

अथ कस्मात् किञ्चिदेवाप्यं द्रव्यं रूपादिषु मध्ये नियमेन रसव्यञ्जकमिन्द्रियञ्चेत्याह * अन्यावयवानभिभूतैः, ईषत्सम्पृक्तैरपि जलावयवैरारब्धं रसनम् * इति रसस्यैव व्यञ्जकमिति।

अन्ये तु अन्यावयवानभिभूतैरसंपृक्तैः शुद्धैर्जलावयवैरारब्धम् इति ब्रुवते। भूयस्त्वाद्रसवत्त्वाच्चोदकं रसज्ञाने प्रकृतिः [ वै. सू. ? ] इति। अस्य च सूत्रस्येदं भाष्यम्—

भूयस्त्वादिति। भूयसामाप्यावयवानां रसोपलब्धिप्रापकादृष्टापेक्षाणां संयोगे सतीपदितरावयवसम्पर्के च विशेषोत्पाद उपदिश्यते। अत एव अन्यावयवाभिभवानुपपत्तिः। जलावयवानां भूयस्त्वादितरेषाञ्च अल्पत्वादिति। रसवत्त्वञ्च रसनेन्द्रियस्य रसोत्कर्षः। सामान्यशब्देनाप्यर्थोऽनुक्त इति रसो ज्ञायतेऽनेनेति रसज्ञानमिन्द्रियम्।

तस्मिन्नुत्पाद्ये प्रकृतिः कारणमुदकं भूयस्त्वाद् व्याकृतान्निमित्तात्। तस्मादेतदेवेन्द्रियम्, रूपादिषु मध्ये नियमेन रसप्रकाशकञ्चेति।

यद् वा कार्यनियमः कारणनियमं विना न घटत इति नियमेन रसनेन्द्रियाद् रसोपलब्धेरेवोत्पत्तिः कुत इत्याह भूयस्त्वाद्रसवत्त्वाच्च निमित्ताद् रसे ज्ञप्तिः ज्ञानम्, तत्र प्रकृतिः कारणं रसनेन्द्रियमिति। तथाहि, संयुक्तसमवायाविशेषेऽपि नियमेन रसोपलम्भान्यथानुपपत्त्या ज्ञायते नियमहेतुः। स चान्यस्यासम्भवाद् रसोत्कर्षो भूयस्त्वञ्चेति कल्प्यते।

यद् वा रसोपलम्भान्यथानुपपत्त्यान्यस्यासम्भवाज् ज्ञायते, रसोत्कर्षे किं निमित्तमित्याह भूयस्त्वमिति। तथा ह्याप्यत्वाविशेषेऽपि रसस्यैवोत्कर्षो न रूपादेरिति भूयस्त्वं विशिष्टोत्पादे निमित्तम्। स चादृष्टवशात्। अदृष्टस्य च व्यवस्थाहेतुत्वादिति।

विषयं निरूपयति। शरीरेन्द्रियव्यतिरिक्तो द्व्यणुकादिप्रक्रमेणारब्धो विषयः। तस्य हि विषयभावेनैवोपकारित्वादिति। स तु सरित्समुद्रहिमकरकादिरिति।

**तेजस्त्वाभिसम्बन्धात्तेजः। रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारवत्। पूर्ववदेषां सिद्धिः। शुक्लं भास्वरञ्च रूपम्। उष्ण एव स्पर्शः। नैमित्तिकञ्च द्रवत्वम्। संख्यादयश्च पूर्ववत्।**

**तदपि द्विविधम् अणुकार्यभावात्। कार्यं शरीरादित्रयम्। शरीरमयोनिजमेव धर्मविशेषसहितेभ्योऽणुभ्यो जायते आदित्यलोके। पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकमन्यावयवानभिभूतैस्तेजोऽवयवैरारब्धं चक्षुः। विषयलक्षणं चतुर्विधं भौमं दिव्यमुदर्यमाकरजञ्च। तत्र भौमं काष्ठेन्धनप्रभवमूर्ध्वज्वलनस्वभावं पचनस्वेदनादिसमर्थम्। दिव्यमबिन्धनं सौरविद्युदादि। भुक्तस्याहारस्य रसादिभावेन परिणामसमर्थमुदर्यम्। आकरजं सुवर्णादि। तत्र संयुक्तसमवायाद् रसाद्युपलब्धिरिति।**

इदानीमुद्देशवतस्तेजोलक्षणपरीक्षार्थमाह * तेजस्त्वाभिसम्बन्धात् * इत्यादि प्रकरणम् । तेजस्त्वेनाभिसम्बन्धस्तेजस्त्वोपलक्षितसमवायो लक्षणमिति । तथाहि, तेजः, इतरस्माद् भिद्यते, तेजस्त्वाभिसम्बन्धात् । ये तु न भिद्यन्ते न ते तेजस्त्वाभिसम्बन्धाः यथा क्षित्यादयः, न च तथा तेजः, तस्मादितरस्माद् भिद्यत इति । व्यवहारो वा साध्यते । तथा तेजःशब्दस्य सामान्यवानर्थ इति ज्ञापनार्थमतीन्द्रियशक्तिप्रतिषेधार्थञ्च पूर्ववद् व्याख्येयम् ।

एवं समवायित्वगुणवत्त्वप्रतिपादनार्थञ्च रूपादिवाक्यम् । तथाहि, रूपस्पर्शादयः संस्कारपर्यन्ता विद्यन्ते यस्य तत् तद्वदिति । * पूर्ववदेषां सिद्धिः * इति । यथा पृथिव्यधिकारे रूपादयो विशेषगुणा गुणविनिवेशाधिकारे सिद्धास्तद्वदिहापीति । तथा "तेजोरूपस्पर्शवद्" (वै. सू. २।१।३) इति सूत्रेण विशेषगुणावुक्तौ । तौ चासाधारणत्वाद् इतरस्माद् भेदकावित्यसाधारणतामाह * शुक्लं भास्वरञ्च रूपम् * प्रकाशनशीलमिति । * उष्ण एव स्पर्शः * न स्पर्शान्तरमिति । * नैमित्तिकञ्च द्रवत्वम् * इति । * संख्यादयश्च पूर्ववत् * इति । "त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम्" ( वै. सू. २।१।७ ) इति सूत्रेण द्रवत्वमुक्तम् ।

लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासाय, अद्वैतवादिनश्च प्रतिषेधाय, सामान्यसमर्थनाय, बीजसद्भावप्रतिपादनाय च * तदपि द्विविधम् * इति पूर्ववद् वाक्यं व्याख्येयम् । तथाहि, न केवलं पृथिव्युदकञ्च द्विविधम्, किं तर्हि ? एतदपीति । तेजोऽपि हि द्विविधमिति । केन रूपेणेत्याह * अणुकार्यभावात् * इति । परमाणुस्वभावं नित्यं कार्यस्वभावञ्चानित्यम् । कार्यस्य चानन्त्यादपरिज्ञानं मा भूदित्याह * कार्यं शरीरादित्रयम् * इति । शरीरमिन्द्रियं विषयमित्यनेन रूपेण ज्ञेयमित्यवान्तरवैधर्म्यम् ।

शरीरस्य सामान्यलक्षणमुक्तमित्युत्पत्तिरेवोच्यते * शरीरमयोनिजमेव * इति । अयोनिजं हि शुक्रशोणितसन्निपातानपेक्षम् । * धर्मविशेषसहितेभ्योऽणुभ्यः * इति । तैजसाः परमाणवः समवायिकारणम्, तत्संयोगाश्चासमवायिकारणम्, पार्थिवाद्यवयवाश्च निमित्तकारणमिति । तच्चादित्यलोके सिद्धमागमात् । अथ तेजोऽवयविनः क्षणिकतायां तदारब्धं विशिष्टोपभोगाजनकमित्याह * पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् * इति । तच्च शरीरं सामान्यलक्षणलक्षितत्वे सति तेजोऽवयवैरारब्धत्वादितरस्माद् भिद्यत इति विशेषलक्षणं ज्ञेयम् ।

अथेन्द्रियस्वरूपनिरूपणार्थमाह * इन्द्रियं सर्वप्राणिनां रूपव्यञ्जकम् * इति। रूपोपलब्धिः, करणकार्या, क्रियात्वात् या या क्रिया सा सा करणकार्या यथा छिदिक्रिया, तथा चेयं क्रिया, तस्मात्, करणकार्येति। यद्रूपोपलब्धेः सम्पादकं करणं तच्चक्षुरिति। तच्च तैजसम्, रूपादिषु मध्ये नियमेन रूपव्यञ्जकत्वात्। यद् यद् रूपादिषु मध्ये नियमेन रूपव्यञ्जकं तत्तैजसम्, यथा प्रदीपः, तथा च रूपादिषु-मध्ये नियमेन रूपव्यञ्जकं चक्षुः, तस्मात्तैजसमिति। चक्षुषो हि रूपवद्द्रव्यादि प्रकाशकत्वोपलब्धेर्नियमेन रूपप्रकाशकत्वमसिद्धं स्यादिति 'रूपादिषु मध्ये' इति पदम्। रूपरसगन्धस्पर्शेषु मध्ये नियमेन रूपव्यञ्जकत्वं विवक्षितमिति।

अथ तैजसत्वाच्चक्षुषो रूपस्येवोष्मप्रकाशकत्वमपि स्यात्, तस्य हि तैजसत्वात् संयुक्तसमवायस्याविशेषाद्, अन्यस्य च विशेषहेतोरभावादित्याह * अन्यावयवानभिभूतैस्तेजोऽवयवैरारब्धं चक्षुः * अतो रूपस्यैव व्यञ्जकमिति। तथा हीषत्पार्थिवावयवसंयुक्तैरनभिभूतैस्तेजोऽवयवैरारब्धं चक्षुरिति रूपस्यैव व्यञ्जकम्।

अथ इत्थम्भूतारम्भे किं प्रमाणम्? कार्यनियमः। तथा हि चक्षुर्व्यापाराद् रूपादिषु मध्ये रूपस्यैवोपलब्धिर्दृष्टा। सा च कारणनियमं विना न स्यादित्यन्यस्यासम्भवाद् विशिष्टोत्पादोऽत्र निमित्तम्। स चादृष्टाद् रूपोपलब्धिसम्पादकात् तस्य हि वस्तुव्यवस्थाहेतुत्वादिति।

भूयस्त्वाद् रूपवत्त्वाच्च रूपज्ञाने प्रकृतिः कारणं तेजः [ वै० सू० ? ] इति। अस्य च सूत्रस्येदं भाष्यम्। रूपं ज्ञायतेऽनेनेति रूपज्ञान चक्षुस्तस्मिन्नुत्पाद्ये प्रकृतिः कारणं तेजो भूयस्त्वान्निमित्तादतो रूपस्यैव प्रकाशकमिन्द्रियञ्चेति। भूयस्त्वं हि भूयसां तेजोऽवयवानां विशिष्टादृष्टोपगृहीतानामीषदितरावयवसम्पर्के चारम्भकत्वमिति। यद् वा रूपे ज्ञप्तिर्ज्ञानम्, तस्मिन्नेव रूपादिषु मध्ये कारणं चक्षुः। कुत इत्याह भूयस्त्वाद् व्याकृताद् रूपवत्त्वाच्च इति। रूपवत्त्वं हि रूपोत्कर्षो विवक्षितः। अन्यथा हि तैजसत्वादुष्णस्पर्शवत्त्वमपि सम्भाव्यत इति विशेषाभिधानमनर्थकं स्यात्। यद् वा रूपादिषु मध्ये रूपस्यैवोपलम्भान्यथानुपपत्त्या ज्ञायते रूपोत्कर्षः। कुतो भवतीत्याह भूयस्त्वादुक्तरूपादिति।

अथ महत्त्वादनेकद्रव्यत्वाच्चक्षुषः कस्मादिन्द्रियेणोपलम्भो न भवति? प्रदीपस्येव विशिष्टरूपाभावात्, यत्र हि रूपवद्द्रव्यस्य चक्षुःस्पर्शनाभ्यामुपलम्भ इति।

रूपविशेषस्तु यत्कृता [ क्व ] चिद्विषये रूपोपलब्धिरयं तदभावाच्च महदनेकद्रव्याश्रयस्याप्यनुपलब्धिः स उद्भवसमाख्यातो रूपधर्मः सहकारिविशेष इति। दृष्टश्च रूपविशेषाभावाद् वारिस्थिते तेजसि महदनेकद्रव्यत्वेऽप्यग्रहणम्। उद्भूतरूपस्य प्रदीपस्यान्धकारेऽपि ग्रहणम्। उपभोगार्था हि सृष्टिर्भावानामिति रूपस्योद्भवे चक्षुषोऽन्धकारेऽपि ग्रहणे दुःखसत्त्वानामुपभोगानुत्पत्तिः स्यादिति तदुपभोगप्रापकादृष्टवशेनानुद्भूतरूपं चक्षुर्जनितं प्रजापतिना। तथोष्णस्पर्शोद्भवेऽप्यनेकचक्षुःसन्निपातात् प्रीतिकरे वस्तुनि नर्तक्यादौ ग्रीष्मसमयेऽत्युष्णैर्मरीचिभिरिव दाहः स्यादित्यदृष्टवशादेवोष्णस्पर्शस्याप्यनुद्भवः कल्प्यत इति।

विषयस्वरूपनिरूपणार्थमाह * विषयलक्षणम् * विषयस्वरूपम्। * चतुर्विधम् * इति। केन रूपेणेत्याह * भौमं दिव्यमुदर्यमाकरजञ्च * इति। विषयलक्षणेन शरीरेन्द्रियाद् व्यावृत्तस्य विषयस्यावान्तरवैधर्म्यमेतदिति। तत्र भूमौ भवं भौमम्। काष्ठान्येवेन्धनानि यस्य तेभ्यः प्रभवत्युत्पद्यत इति तत्प्रभवमितीन्धनविशेषादितरस्माद् भिद्यते। तच्चोर्ध्वज्वलनस्वभावो यस्येत्यूर्ध्वज्वलनस्वभावकमिति। अमुष्मादपीतरस्माद् भिद्यत एव। यदेवार्थक्रियाकारि तदेव परमार्थसदिति दर्शनस्य सत्तासम्बन्धेनापि सत्त्वाभ्युपगमेऽप्यभ्युपगमवादेन प्रतिषेधार्थम्। क्रियानिरूपणञ्च पचनस्वेदनादिसमर्थमिति। दिव्यमविन्धनविशेषाद् विशिष्यत इत्याह * अबिन्धनम् * इति। आप इन्धनं यस्य, न त्वाप एवेति। तच्च सौरमिति आदित्यसम्बद्धम्। विद्युदादीत्यादिपदेनोल्का ( पाता ) देर्ग्रहणमिति। एवमुदरे भवमुदर्यम्। तच्च भुक्तस्याहारस्य रसादिपरिणामार्थमिति रसमलधातुपरिणामार्थम्। परिणामश्च परमाणुषु पूर्वरूपादिनिवृत्तावुत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण रसादिद्रव्यारम्भ इति वक्ष्यामः पाकजोत्पत्तौ। आकरजञ्चेति। आकराज्जातं सुवर्णादि। आदिग्रहणात् त्रपुसीसलोहरजतानां ग्रहणम्।

अथैतेषां तैजसत्वे किं प्रमाणम्? आगमः। तथा च "अग्नेरपत्यं प्रथमं सुवर्णं द्यौर्वैष्णवी सूर्यसुताश्च गावः"।

अथाग्नेर्जातमतज्जातीयं भवतीत्यनेकान्तादसाधनमेतत्। तथा चाग्नेर्जातं धूमादि न तज्जातीयम्। तदसत्। अपत्यव्यवहारस्य साजात्यापेक्षयैव दृष्टत्वात्। तथाहि, न कार्यमात्रेऽपत्यव्यवहारो दृष्टः। किं तर्हि? समानजातीये। यथा मानुषापत्यमिति। नन्वेवं चेतनेष्वेवापत्यव्यवहारोपलब्धेरचेतनेऽनुपपत्तिः? न। तेजोऽधिष्ठानस्य

चेतनतया तदपेक्षयास्योपपत्तेः। यद् वा अग्निकार्यस्यानेकत्वेऽप्यग्नेरपत्यं सुवर्णमिति विशेषाभिधानात् समानजातीयत्वं लभ्यते। अविशेषविवक्षायान्तु कार्यान्तरमपत्यमित्यभिदध्यात्। आगमान्तराद्वा विशेषप्रतिपत्तिरित्यलम्। तथा प्रथमं सुवर्णमित्यभिधानादग्नेरपत्यं रजतादिकमपि लभ्यतेऽन्यथा हि प्रथममित्यनर्थकं स्याद् विशेषणम्। एवञ्च सति गुरुत्वाधिकरणत्वात् पार्थिवं सुवर्णादीत्यनुमानमागमबाधितत्वादप्रमाणम्। आगमिके हि विषयेऽनुमानप्रवृत्तेः प्रतिषेधात्।

अथैतेषां तैजसत्वे रसाद्युपलब्धिस्तर्हि कथम्? संयुक्तसमवायात्। तथाहि, संयुक्तं सुवर्णादौ पार्थिवं द्रव्यम्, तत्र समवेता रसादय उपलभ्यन्त इत्याह * तत्र संयुक्तसमवायाद् रसाद्युपलब्धिः * इति। अथ द्रवत्वमप्येवमस्तु, किमर्थं तस्य तेजोगुणत्वमिति चेत्, न। पार्थिवादस्य विशेषोपलब्धेः। तथाहि, पार्थिवं लाक्षाद्यग्निसंयोगाद् भस्मतामापद्यमानं दृष्टम्। सुवर्णादौ च भृशमप्यग्निसंयोगातिशयेन द्रवत्वमेव। उष्णस्पर्शानुद्भवश्चात्राऽदृष्टात्।

**वायुत्वाभिसम्बन्धाद् वायुः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारवान्। स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजो गुणविनिवेशात् सिद्धः। 'अरूपिष्वचाक्षुष'–वचनात् सप्तसंख्यादयः। 'तृणकर्म'–वचनात् संस्कारः। स चायं द्विविधोऽणुकार्यभावात्। तत्र कार्यलक्षणश्चतुर्विधः। शरीरमिन्द्रियं विषयः प्राण इति। तत्र शरीरमयोनिजमेव धर्मविशेषसहितेभ्यो वायुपरमाणुभ्यो जायते मरुतां लोके, पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं शरीरव्यापि त्वगिन्द्रियम्। विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गस्तिर्यग्गमनस्वभावो मेघादिप्रेरणधारणादिसमर्थः। तस्याप्रत्यक्षस्यापि नानात्वं संमूर्छनेनानुमीयते। संमूर्छनं पुनः समानजवयोर्विरुद्धदिक्क्रिययोर्वाय्वोः सावयविनोरूर्ध्वगमनेनानुमीयते। तदपि तृणादीनामूर्ध्वगमनेनेति। प्राणोऽन्तःशरीरे**

**रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदात् प्राणापानादिसंज्ञां लभत इति।**

इदानीं वायोरुद्देशवतो लक्षणपरीक्षार्थं * वायुत्वाभिसम्बन्धात् * इत्यादिप्रकरणम्। वायुरिति लक्ष्यनिर्देशो वायुत्वाभिसम्बन्धादिति लक्षणम्। वायुत्वेनाभिसम्बन्धो वायुत्वेनोपलक्षितः समवाय इति। समवायो ह्यतिव्यापकत्वादलक्षणं स्यादिति वायुत्वपदम्। वायुत्वञ्चासम्बद्धमपक्षधर्मतया गमकं न स्यादिति पक्षधर्मताज्ञापनार्थमभिसम्बन्धपदम्। तथा च वायुत्वेनेतरस्माद् भिद्यते, वायुत्वाभिसम्बन्धात्, ये तु न भिद्यन्ते न ते वायुत्वेनाभिसम्बद्धाः यथा क्षित्यादयः, न च तथा वायुत्वेनानभिसम्बद्धो वायुः, तस्मादितरस्माद् भिद्यत इति। व्यवहारो वा साध्यते। शेषञ्च लक्षणस्य दूषणप्रतिसमाधानं पृथिव्यधिकारे ज्ञेयम्। तथा वायुशब्दस्य सामान्यवानर्थं इति ज्ञापनार्थमतीन्द्रियशक्तिप्रतिषेधार्थञ्च पूर्ववद् वाक्यं व्याख्येयम्।

समवायित्वगुणवत्त्वप्रतिपादनार्थं स्पर्शादिवाक्यम्। स्पर्शादयः संस्कारपर्यन्ता विद्यन्ते यस्यासौ तद्वानिति। स्पर्शस्य साधारणत्वादन्यस्माद् भेदकत्वाभावादित्यसाधारणतामाह * स्पर्शोऽस्यानुष्णाशीतत्वे सत्यपाकजः * इति। अनुष्ण इत्युष्णस्पर्शव्यवच्छेदः। अशीत इति शीतस्पर्शात्। अपाकज इति पार्थिवात्। स च गुणविनिवेशाद् द्वितीयाध्याये सिद्धः "वायुः स्पर्शवान्" ( वै० सू० २।१।४ ) इत्यनेन सूत्रेण।

अत्र च स्पर्शवानिति सामान्यशब्देनापि अर्थादयं विशेषो विवक्षितोऽनुष्णाशीतत्वे सत्यपाकजस्पर्शवानिति। "अरूपिष्वचाक्षुषत्वात्" ( वै० सू० ४।१।१२ ) इति। सूत्रेण संख्यादयः सिद्धाः।

तथाहि, रूपविशेषवति द्रव्ये चाक्षुषास्तद्विपरीते चाचाक्षुषाः, इत्यन्यपरेणापि सूत्रेण अरूपिषु संख्यादीनां सद्भावोऽभिहित एव। तथा चारूपिषु समवेताः संख्यादयः परं चक्षुर्ग्राह्या न भवन्तीति प्रतिषेधः। तथा * तृणकर्मवचनात् * इति "वायुसंयोगात्तृणे कर्म" ( वै० सू० ५।१।१४ ) इति सूत्रं दर्शयति।

वायुसंयोगश्च तृणकर्मोत्पत्तौ सापेक्षः कारणमिति प्रयत्नादेरभावाद् वेगापेक्षः कारणमिति संस्कारः सिद्धः।

तथा वायुत्वसामान्यस्य भेदाधिष्ठानत्वादिति तत्समर्थेनार्थाल्लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासार्थम्, अद्वैतवादिप्रतिषेधार्थं बीजसद्भावप्रतिपादनार्थञ्च * स चायं द्विविधोऽणुकार्यभावात् * इति वाक्यम् । तथा ह्यणुस्वभावो नित्यः कार्यस्वभावस्त्वनित्य इति ।

अवान्तरवैधर्म्यं दर्शयति * कार्यलक्षणः * । कार्यस्वभावः । *चतुर्विधः* इति । केन रूपेणेत्याह * शरीरमिन्द्रियं विषयः प्राण * इति ।

शरीरोत्पत्तिमाह * शरीरमयोनिजमेव * इति । अयोनिजञ्च शुक्रशोणितसन्निपातमनपेक्ष्योपजातम् । * धर्मविशेषसहितेभ्यो वायुपरमाणुभ्यः * इति । तथाहि, वायवीयाः परमाणवः समवायिकारणम्, तत्संयोगाश्चासमवायिकारणम्, क्षित्यादि च निमित्तकारणमिति । तच्च * मरुतां लोके * सिद्धमागमात् । अथ वायोस्तिर्यग्गतिशीलत्वात् क्षणिकत्वाच्च तदारब्धशरीरमुपभोगाजनकं स्यादित्याह * पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् * इति ।

इन्द्रियस्वरूपनिरूपणार्थमाह * इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकम् * इति । तथाहि, स्पर्शोपलब्धिः, करणकार्या, क्रियात्वाद् या या क्रिया सा सा करणकार्या, यथा छिदिक्रिया, तथा चेयं क्रिया, तस्मात् करणकार्येति । यद् यत् स्पर्शोपलब्धेः सम्पादकं करणं तद् वायवीयम्, रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकत्वात्, यद् यद् रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकं तद् वायवीयं दृष्टम्, यथा व्यजनानिलः, तथा च रूपादिषु मध्ये नियमेन स्पर्शव्यञ्जकं त्वगिन्द्रियम्, तस्माद् वायवीयमिति । त्वगिन्द्रियस्य स्पर्शवद्द्रव्यादिव्यञ्जकत्वोपलब्धेर्नियमेन स्पर्शव्यञ्जकत्वमसिद्धं स्यादिति रूपादिषु मध्य इति विशेषणम् । व्यजनानिले तु तद्गतस्पर्शव्यक्तौ यद्यपि रूपाद्यसम्भवस्तथापि शीतादिस्पर्शव्यञ्जकत्वसद्भावाद् विशेषणसद्भावः ।

अथ वायवीयत्वाविशेषे कस्मात् किञ्चिदेव स्पर्शव्यञ्जकमिन्द्रियमिति त्वगिन्द्रियञ्चेत्याह * पृथिव्याद्यनभिभूतैः * वायवीयैर्विशिष्टादृष्टोपगृहीतैरीषदितरावयवसंपृक्तैः शुद्धैर्वा आरब्धम् । अतः स्पर्शस्यैवाभिव्यञ्जकमिन्द्रियञ्चेति । तच्च * शरीरव्यापि * सर्वत्र स्पर्शोपलम्भाद् विज्ञातम् । तस्य च संज्ञा * त्वगिन्द्रियम् * इति । त्वगिति शरीरावगुण्ठकं चर्म, तत्स्थानमिन्द्रियम् उपचारेण त्वगिन्द्रियमित्युक्तम् ।

अथ त्वगिन्द्रियस्य विशिष्टोत्पादे किं प्रमाणम् ? कार्यनियमः। तथा च रूपादिषु मध्ये स्पर्शस्यैवोपलम्भान्यथानुपपत्त्या ज्ञायते कारणनियमः। स चान्यस्यासम्भवाद् विशिष्टोत्पादे निमित्तमिति कल्प्यते।

अस्य च सूत्रस्येदं भाष्यम् "भूयस्त्वात् स्पर्शवत्त्वाच्च स्पर्शज्ञाने प्रकृतिर्वायुः" (लुप्तं वै० सू०) इति। स्पर्शो ज्ञायतेऽनेनेति स्पर्शज्ञानमिन्द्रियमिति। तस्मिन्नुत्पाद्ये प्रकृतिः कारणं वायुः, भूयस्त्वान्निमित्तात्, अतस्तदेवेन्द्रियं रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकमिति। भूयस्त्वादिति। भूयसां विशिष्टादृष्टोपगृहीतानां वाय्ववयवानाम् ईषदितरावयवसम्पर्केणारम्भकत्वम्।

यद् वा स्पर्शे ज्ञप्तिर्ज्ञानम्, तस्मिन्नेव रूपादिषु मध्ये प्रकृतिः कारणं वायुः। कुत इत्याह भूयस्त्वाद् व्याकृतात् स्पर्शवत्त्वाच्चेति। स्पर्शवत्त्वञ्चास्य स्पर्शोत्कर्षो विवक्षितः।

यद् वा स्पर्शस्यैवोपलम्भान्यथानुपपत्त्या ज्ञातः स्पर्शोत्कर्षः, कस्माद् भवतीत्याह भूयस्त्वान्निमित्तादिति।

ननु सर्वमेतद् असम्बद्धम्, वायुसद्भावे प्रमाणाभावात्। न। प्रत्यक्षेणोपलम्भात्। तथा हि स्पार्शनव्यापाराद् अपरोक्षज्ञानमुत्पद्यमानं दृष्टम् 'वायुर्वाति, शीतो वायुः, उष्णो वायुः' इति। न चेदं लिङ्गलिङ्गिसम्बन्धानुस्मरणपरामर्शज्ञानानन्तरमुत्पद्यत इति नानुमानप्रभवम्। शब्दं विनाप्युत्पत्तेर्न शाब्दम् इतीन्द्रियानुविधानाद् इन्द्रियजम्। यच्चापरोक्षज्ञानं तत्प्रत्यक्षम्।

अथ "महत्त्वादनेकद्रव्यवत्त्वाद् रूपविशेषाच्च द्रव्यं प्रत्यक्षम्" (वै० सू० ४।१।६) इति सूत्रविरोधः, न। सूत्रार्थापरिज्ञानात्। तथा च सूत्रार्थः, अपरोक्षज्ञानसद्भावे सति समस्तं व्यस्तञ्च लक्षणमिति ज्ञेयम्। यत्र ह्यपरोक्षं ज्ञानं तत्रामीषां समस्तव्यस्तानां कारणत्वम्। तथा ह्यात्मा महत्त्वादेव प्रत्यक्षः। वायुस्तु महत्त्वानेकद्रव्यवत्त्वाभ्याञ्च। यत्र च चक्षुःस्पर्शनाभ्यां विज्ञानं द्रव्ये तत्र समस्तं लक्षणमिति। प्राधान्यन्तु यथादर्शनमभ्युपेयम्। तथा हि रात्रावग्निर्दूरेऽप्युपलभ्यते रूपातिशयात्। महत्त्वानेकद्रव्यवत्त्वेऽप्यग्रहणं पर्वतादेरिति रूपस्य प्राधान्यम्। एवमालोकसद्भावे दूरेऽपि पर्वतादेर्ग्रहणम्। महत्त्वे तु अल्पप्राधान्यमित्युत्प्रेक्ष्यम्।

अथ यत्र स्पार्शनप्रत्यक्षत्वं तत्र दर्शनस्यापि व्यापारो दृष्ट ओघशब्दादौ, संख्यादयश्च प्रत्यक्षा इतीहापि तथाभावः स्यात्। न चास्त्यतः स्पर्शमात्रमेव प्रत्यक्षम्, वारिस्थिते तेजस्युष्णतावदिति। यथा वारिस्थिते तेजसि आश्रयाप्रत्यक्षत्वेऽप्युष्णताग्रहणं तद्वदिहाप्याश्रयाप्रत्यक्षत्वेऽपि स्पर्शस्यैव ग्रहणमिति।

नैतदेवम्। वारिस्थिते तेजसि रूपस्यानुद्भूतत्वात् स्पर्शमात्रस्य प्रत्यक्षत्वं युक्तम्। यत्र हि रूपोद्भवः कारणं प्रत्यक्षत्वे तत्रावश्यं चक्षुषापि ग्रहणम्, संख्यादयश्च प्रत्यक्षाः। रूपानुद्भवे च न ग्रहणमिति। दृष्टश्च वायौ न रूपविशेषः प्रत्यक्षतायां कारणमिति चक्षुषा अग्रहणम्। संख्यादेरप्रत्यक्षत्वं युक्तम्।

अथ रूपविशेषाभावेऽप्रत्यक्षत्वमेव स्यादिति चेत्। न। आत्मना व्यभिचारात्। तथाहि, आत्मा रूपविशेषाभावेऽप्यन्तःकरणप्रत्यक्षः। संख्यादयः प्रत्यक्षा अप्यात्मनि रूपविशेषाभावादेव अप्रत्यक्षा इति।

अथ द्रव्यस्पार्शनप्रत्यक्षत्वं रूपविशेषसद्भावे सत्येव दृष्टं घटादौ। तथा (च) रूपस्पर्शव्यतिरिक्तद्रव्यालम्बनत्वेऽनुसन्धानज्ञाने च प्रमाणमस्ति 'यमहमद्राक्षं चक्षुषा तमेवैतर्हि स्पृशामि, यं वा अस्प्राक्षं स्पार्शनेन तं पश्यामि' इति। न च वायावेतदस्तीति स्पर्शमात्रालम्बनमिति चेत्। तदेतदसत्। रूपं विनापि वायोः स्पार्शनेन प्रत्यक्षत्वात्। अथ साध्यमेतत्। न। दृष्टस्य साध्यत्वे सत्यतिप्रसङ्गात्। तथाहि, स्पर्शनव्यापाराद् वायावपरोक्षज्ञानम् इन्द्रियभावव्यतिरेकाभ्यामुत्पद्यमानं दृष्टमित्युक्तम्। तस्य च साध्यत्वे घटादावपि दर्शनस्पार्शनप्रत्यक्षं साध्यमेव स्यात्। अथेन्द्रियानुविधानान्न साध्यमेतत्, समानं वायावपि। तथेदमनुसन्धानम्, तद् द्वीन्द्रियग्राह्यत्वाद् घटादावुपपन्नम्, वायोरेकेन्द्रियग्राह्यत्वादसम्भवेनातीन्द्रियत्वादिति।

न चानुसन्धानादेव घटादिज्ञानस्य रूपादिव्यतिरिक्तद्रव्यालम्बनत्वम्। किं तर्हि? घटादिज्ञानस्य विलक्षणत्वाद् रूपादिव्यतिरिक्तार्थालम्बनत्वम्। तत्र चानुसन्धानस्यापि प्रामाण्यमिति। नैवं 'वायुर्वाति' 'शीतो वायुः' इति ज्ञानस्य स्पर्शज्ञानविलक्षणत्वात् तद्व्यतिरिक्तार्थालम्बनत्वम्। न च स्पर्शोपलम्भनादनुमानजं ज्ञानमेतदिति वाच्यम्, अविनाभावसम्बन्धानुस्मरणादेरभावात्। अननुभूयमानस्यापि सम्बन्धानुस्मरणादपि [? देरपि] व्यापारस्य [? त्व] कल्पना अन्याय्या,

घटादिज्ञानस्याप्यनुमानताप्रसङ्गात् । वायुप्रत्ययसमानाधिकरणश्चायं प्रत्यय इति वाय्वालम्बन एव ।

अन्ये तु अनुमानेनापि वायोः प्रत्यक्षतां व्यवस्थापयन्ति, स्वयं प्रत्यक्षेणोपलब्धोऽप्यर्थः परस्मै प्रतिपाद्यमानोऽनुमानेनैव प्रतिपाद्यत इति मन्यमानाः । तथा च अस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानो वायुः, अस्मदादित्वगिन्द्रियप्रत्यक्षः अनुद्भूतरूपान्यत्वे सति अस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानत्वात्, यो योऽनुद्भूतरूपान्यत्वे सति अस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानः स सोऽस्मदादित्वगिन्द्रियप्रत्यक्षः, यथा घटादिः, तथा चानुद्भूतरूपान्यत्वे सत्यस्मदाद्युपलभ्यमानस्पर्शाधिष्ठानो वायुः, तस्मादस्मदादित्वगिन्द्रियप्रत्यक्ष इति ।

नन्वेवं सर्वेषामप्यतीन्द्रियाणामस्मदादिप्रत्यक्षत्वं स्यात् प्रमेयत्वादिति हेतुना ? न । परप्रतिपत्त्यैव बाध्यमानत्वात् । तथाहि, परो विजानाति 'न मेऽस्ति परमाण्वादिविषयज्ञानम्' इति । स्वयमपरोक्षज्ञानसद्भावे सति परप्रतिपादनायानुमानोपन्यासो युक्तः । स च वायावस्ति न परमाण्वादाविति । तथा परमाण्वादिरस्मदादीन्द्रियविषयत्वे परमाण्वादिरूपतां जह्यात्, महत्त्वादियोगित्यस्मदादीन्द्रियव्यापारोपलब्धेरिति ।

इदानीं प्रत्यक्षेण वायुसद्भावे व्यवस्थापिते विषयनिरूपणार्थमाह * विषयस्तूपलभ्यमानस्पर्शाधिष्ठानम् * इति । उपलभ्यमानश्चासौ स्पर्शाधिष्ठानभूतश्चेति तथोक्तः । अप्रत्यक्षवादिनाम् उपलभ्यमानश्चासौ स्पर्शश्च, तस्याधिष्ठानभूत इति व्याख्या । तत्र चास्मदादिप्रतिपादनाय शास्त्रस्यारम्भाद् अस्मदादिविशेषणमप्यूह्यम् । उपलम्भोऽपीन्द्रियद्वारेणैव विवक्षित इति । अन्यथा हि प्रमाणान्तरेणोपलम्भः शरीरादावप्यस्तीति उपलभ्यमानस्पर्शाधिष्ठानत्वं व्यभिचारि विषयलक्षणं स्यात् । एवम् अस्मदादीन्द्रियोपलभ्यमानस्पर्शाधिष्ठानत्वाद् इतरस्माद् भिद्यते, विषय इति वा व्यवहर्त्तव्यः ।

तथा न परं विषयलक्षणो वायुरस्मदादीन्द्रियप्रत्यक्षोऽनुमानावगम्यश्चेत्याह * स्पर्शशब्दधृतिकम्पलिङ्गः * इति । स्पर्शश्च शब्दश्च धृतिश्च कम्पश्चेति लिङ्गानि यस्यासौ तथोक्त इति । तथा ह्यनुष्णाशीतत्वे सति अपाकजः स्पर्शः, क्वचिदाश्रितः, गुणत्वात्, यो यो गुणः स स आश्रितो दृष्टः यथा रूपादिः, तथा चायं गुणः, तस्मादाश्रित इति । गुणत्वञ्चास्य सामान्यवत्त्वेऽद्रव्यत्वे च सति नियमेनाचाक्षुषप्रत्यक्षत्वदा

रसवदिति । अचाक्षुषप्रत्यक्षत्वं घटादावस्तीति नियमग्रहणम् । तथापि स्पर्शत्वादिसामान्ये नियमेनाचाक्षुषप्रत्यक्षत्वम्, न च गुण इति व्यभिचारस्तदर्थं सामान्यवत्त्वे सतीति विशेषणम् । सामान्यवत्त्वंम् द्रव्यादित्रयस्यास्तीति नियमेनाचाक्षुषप्रत्यक्षपदम् । सामान्यवत्त्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वं वाय्वादावस्तीति अद्रव्यत्वे सतीति पदम् । अस्य पक्षधर्मत्वे सति सपक्षैकदेशे वर्त्तमानस्य अत्यन्तं विपक्षाद् व्यावृत्तस्य अबाधितविषयत्वाद् असत्प्रतिपक्षत्वेन गमकत्वम् ।

अथास्त्वनुष्णाशीतत्वे सत्यपाकजस्पर्शस्य आश्रितत्वम्, अपाकजत्वे तु किं प्रमाणम् ? पाकजरूपादिवियोगात् । तथाहि, पाकजस्पर्शः पाकजरूपादिसहितो दृष्टो घटादाविति, अस्यापि पाकजत्वे तथाभावः स्यात् । अथ सद्भावेऽप्यनुद्भूतत्वात् तेषामनुपलम्भः ? तन्न । अन्यत्राभावात् । न हि पाकजस्पर्शोपलम्भेऽपि रूपादीनामन्यत्र अत्यन्तानुपलम्भो दृष्ट इति । न चात्र रूपादीनामस्तित्वे प्रमाणस्तीत्यनुद्भवानुपपत्तिः । सद्भावेऽनुद्भवकल्पनोपपत्तेः । अथ असद्भावे किं प्रमाणमिति चेद्, अत्यन्तानुपलब्धिरेव । तथाहि, विवक्षितस्पर्शाधिकरणं गुरुत्वरहितं सम्भवतीति सहचरिता रूपादयो न कदाचिदुपलभ्यन्ते प्रमाणत इत्यसन्तः । तथा पाकजस्पर्शस्य गुरुत्वसाहचर्योपलब्धेरस्यापि पाकजत्वे तत्सद्भावः स्यात् । गुरुत्वसम्बन्धे चोर्ध्वं पर्णादिधारणानुपपत्तिः, तस्यापि गुरुत्वसम्बन्धितया तत्प्रसङ्गात् । न च पाकजस्पर्शाधिकरणं गुरुत्वरहितं सम्भवतीति पार्थिवस्पर्शविलक्षणत्वान्न पृथिव्यां वर्त्तते, नाप्युदकतेजसोरनुष्णाशीतत्वात् । अन्यत्रासम्भव एवेति । यत्रायं वर्त्तते असौ वायुरिति ।

तथा आद्यः शुकशुकाशब्दः सन्ततानुमितः, स्पर्शवद्द्रव्यसम्बन्धकार्यः, विभागजशब्दजशब्दान्यत्वे सति शब्दत्वात्, यो यो विभागजशब्दजशब्दान्यत्वे सति शब्दः स स्पर्शवद्द्रव्यसंयोगकार्यः, यथा भेरीदण्डसंयोगजः शब्दः, तथा चायम्, तस्माद् यथोक्तसाध्य इति । ननु विभागजशब्दादस्य विशेषानुपलब्धेः सन्दिग्धं तदन्यत्वे सतीति विशेषणम् । न । रूपादिमतां घनावयवसन्निवेशभाजां कारणविभागपूर्वकविभागस्य शब्दारम्भकत्वोपलब्धेस्तदभावस्तु अविवादास्पद इति विभागजत्वाभावात् । तथा विभागजत्वे शुकशुकादिशब्दस्य शाखादिषु कम्पसमानकालोपलब्धिर्न स्यात् । सा तु दृष्टा । न चात्र शाखादिवायुविभागस्य शब्दारम्भकत्वं युक्तम्, कारणविभागजत्वानुपपत्तेरतस्तदन्यत्वे सतीति विशेषणमसन्दिग्धमेव ।

धृतिर्धारणम्, आकाशे पर्णादीनामवस्थानम्। तच्च स्पर्शवद्द्रव्यसंयोगकार्यम्, प्रयत्नाद्यभावे सति धारणत्वात्, यद् यद् प्रयत्नाद्यभावे सति धारणं तत्तत् स्पर्शवद्द्रव्यसंयोगकार्यम्, यथा आधारगतोदकम्, तथा चेदम्, तस्मात् स्पर्शवद्द्रव्यसंयोगकार्यमिति।

पक्षीणां [ ? सन्निपतितानां ] मूर्च्छनमित्याह * संमूर्च्छनं पुनः समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः *। सन्निपातो हि सम्बन्धः। स च कयोः ? * वाय्वोः *। किंविशिष्टयोरित्याह * समानजवयोः *। समानस्तुल्यो जवो वेगो ययोस्तौ समानजवौ तयोरिति। अन्यथा हि एकस्याल्पजवत्वे बलीयसा अभिभवान्न संमूर्च्छनमिति। तथा ह्येकदिक्क्रिययोर्न संमूर्च्छनमित्याह [ विरुद्धदिक्क्रिययोः ] विरुद्धे दिक्क्रिये ययोस्तौ विरुद्धदिक्क्रियाविति। तथा ह्येकस्य प्राचीनदिग्गमनमन्यस्य च तदभिमुखमागमनमिति क्रिययोर्विरोधः।

अन्ये तु विरुद्धायां दिशि क्रिये ययोस्तौ तथोक्ताविति मन्यन्ते। अत्राविरोधश्चिन्तनीयः।

अथेत्थं सन्निपातः कुतः प्रतीयत इत्याह सोऽपि सन्निपातः * सावयविनोरूर्ध्वगमनेनानुमीयते *। सहावयविभिर्वर्त्तेते यौ तौ सावयविनाविति, तदवयवा अपि महान्तोऽवयविन इति ज्ञापनार्थमिदमुक्तम्, अन्यथा हि सावयवयोरिति स्यात्।

अन्ये त्ववयविनोऽत्र तृणादयो विवक्षिता न तदवयवा इति मन्यन्ते।

अथ वायोरेवोर्ध्वगमनं कथं प्रतीयत इत्याह * तदपि तृणादीनामूर्ध्वगमनेनेति *। तथाहि, तृणादीनामूर्ध्वगमनमचेतनत्वान्नोपपन्नं भवति, नापि वेगात्, क्वचिन्मन्दगतित्वाद्, आद्यकर्मोत्पत्तौ च तदभावात्। अन्यस्य च सामर्थ्यानुपलब्धेर्वेगवद्द्रव्यसम्बन्धोऽनुमीयते। न च तत् पार्थिवम्, आप्यं वा। तस्यापि गुरुत्वाधिकरणतया ऊर्ध्वगमने गुरुत्वरहितं निमित्तान्तरं वाच्यम्। न चात्र अग्नेरूर्ध्वज्वलनस्वभावतया तत्संयोगात् तृणादीनामूर्ध्वगमनम्, इन्धनविशेषाभावेन ऊर्ध्वज्वलनासम्भवात्, तदनुपलब्धेश्च। न चान्यस्यात्र सामर्थ्यमिति वायुसम्बन्धात् तृणादीनामूर्ध्वगमनमिति ज्ञायते। तस्य तिर्यग्गतिशीलतया नोर्ध्वं गमनम्, अन्तरालेऽन्यथा सम्भाव्यत इति वाय्वन्तरेण प्रतिबन्धः। तथा हि वायुर्बलीयान् अपरेण च बलीयसा प्रतिबन्धात् सन्निपातात् स्वां गतिं

विरहय्योर्ध्वं गच्छति । तत्संयोगाच्च तृणादीनामूर्ध्वंगमनमिति सिद्धं तृणादीनामूर्ध्वंगमनेन वायोरूर्ध्वंगमनम् । तेन च सन्निपातः । तस्मान्नानात्वमिति ।

अथ प्राणाख्यस्य वायोरुपलभ्यमानस्पर्शाधिष्ठानतया विषयान्तर्भावेऽपि प्राधान्यज्ञापनार्थं विशिष्टार्थक्रियाकारितया पृथगभिधानम् । तथा तत्त्वज्ञानिनो योगाभ्यासे प्रवर्तमानस्य प्राणोऽत्यन्तमुपकारीति पृथगुच्यत इत्याह * प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुः * इति । तथा ह्यन्तःशरीरे वर्तमानत्वात् प्राण इत्युक्ते रसादिभिर्व्यभिचारः, तदर्थं रसमलधातूनां प्रेरणादिहेतुरिति । तथापि रसादिप्रेरणहेतुत्वात् प्राण इत्युक्तेऽदृष्टादिषु व्यभिचारः, तदर्थम् अन्तःशरीरे वर्तमान इति । न चादृष्टादयोऽन्तःशरीरे वर्तन्तेऽदृष्टस्य चात्मवृत्तित्वाद्, ईश्वरस्य चावृत्तिमत्त्वादिति । तदेवमन्तःशरीरे वर्तमानो रसादिप्रेरणहेतुत्वाद् इतरस्माद् भिद्यते, प्राण इति वा व्यवहर्त्तव्यः ।

यद् वा वायुसामान्यलक्षणानुवृत्तौ सत्यामन्तःशरीरे वर्तमानत्वाद् रसादिप्रेरणहेतुत्वाच्च प्राण इत्युक्ते व्यभिचाराभावः ।

अथासौ किमेकोऽनेक इत्याह * एकः सन् क्रियाभेदाद् अपानादिसंज्ञां लभते * इति । अथ वास्तवभेदः कस्मान्नेष्यते ? बाधकोपपत्तेः । तथा हि पञ्च वायवः शरीरे यदि व्याप्त्या वर्तन्ते तदा सम्बन्धादेको वायुर्भवतीति पञ्चत्वनिवृत्तिः । अथाव्याप्त्या, तथाप्येकेन शरीरस्य व्यापनादपरेषामसम्भव इति मन्यमानः क्रियाभेदेन भेदमाह । स एव मुखनासिकाभ्यां निष्क्रमणशीलो वायुः प्राणाख्यः । अधोनयनान्मलादेरपानः । समं नयनात् समानः । ऊर्ध्वं नयनादुदानः । विविधमनेकप्रकारेण नयनाद् व्यान इति ।

**इति वायुवैधर्म्यम्**

●

**इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतस्यान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतादृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणु-**

विभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः । तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिंश्च सति पूर्वपूर्वस्य विनाशः । ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धाश्चात्मानस्तावन्तमेव कालम् ।

ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां पूर्वदिशा परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति ।

तदनन्तरं तस्मिन्नेवाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिप्रक्रमेण महापृथिवी समुत्पन्ना संहता अवतिष्ठते ।

तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमुत्पद्यते ।

तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मा अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णान् अन्यानि चोच्चावचानि च सृष्ट्वा आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति ।

## सृष्टिसंहारविधिः

अथेदानीं भूतानां परीक्षाशेषनिवर्तनद्वारेणेश्वरपरीक्षार्थं * चतुर्णाम् * इत्यादिप्रकरणम्। तथा हि भूतानामुद्देशानन्तरं पूर्वप्रकरणेषु लक्षणपरीक्षाभिधानेऽपि सृष्टिसंहारविधिर्नोक्तः। तथेश्वर ऊर्ध्वं नमस्कारव्याजेनोद्दिष्टो लक्षणतश्च, प्रधानत्वाद् धर्मपरीक्षामन्तरेण परीक्षितुं न शक्यत इति प्रकरणारम्भः। सृष्टिसंहारविधिश्च तुल्यतयैकस्मिन्नेव प्रकरणेऽभिधीयते। प्रतिप्रकरणाभिधाने तु प्रकरणचतुष्टयमेतावत् स्यादिति सङ्ग्रहरूपताव्याघातः।

नन्वेवं वैधर्म्यावसरे साधर्म्यप्रतिपादनमन्याय्यम्? न। प्रत्येकं भूतेषु सृष्टि-संहारविधेर्वैलक्षण्येऽपि एकत्राभिधानात् साधर्म्यज्ञानम्, न परमार्थतः। न च वैधर्म्येऽभिधीयमाने यद् यत् साधर्म्यं तस्य प्रतिषेधः। यथा पृथिव्यादीनां परमाणुकार्यरूपतया द्वैविध्यम्। कार्यञ्च शरीरादित्रयं परस्परवैलक्षण्याद् वैधर्म्येऽपि न साधर्म्यरूपतां विजहातीति।

अथ चतुर्णाम् इत्युक्ते न ज्ञायते केषाम् अतो * महाभूतानाम् * इति। महद्ग्रहणम् अणुव्यवच्छेदार्थम्। नन्वेवं द्व्यणुकस्यापि सृष्टिसंहारवतो व्यवच्छेदः स्यात्? न। महदारम्भकत्वेन तस्यापि महच्छब्दवाच्यत्वात्। तथाहि, द्व्यणुकादि-प्रक्रमेणोत्पत्तिविधानात् संहारस्य च परमाण्वन्तस्य द्व्यणुकेऽपि सृष्टिसंहारविधौ प्रतिज्ञा कार्यैव। सा चैवं कृता स्यात्। तथापि महाभूतानामित्युक्ते न ज्ञायते कियतामिति, तथापि चतुर्णां भूतानामित्युक्ते न ज्ञायते केषामतः * पृथिव्यादीनाम् * इति लभ्यते। न चाकाशस्य एतद्व्याख्यानावसरसंगत्या अस्त्ववसरः। तदेवं चतुर्णां महाभूतानां सृष्टिसंहारयोर्विधिः प्रकारस्तावेवाभिधीयेते अनेनेति। विधिः प्रमाणं ताभ्यां वा प्रमाणभूताभ्यां विधिर्विधाता कर्त्तोच्यत इत्यावर्त्त्यमानम् अनेकार्थमेतदेव वाक्यम्।

तद् * ब्राह्मेण मानेन * इत्यादिना संहारविधेर्व्याख्यानं क्रमातिक्रमेणादौ संसारस्यानादित्वज्ञापनार्थम्। तथाहि, संहारात् पूर्वं सृष्टिर्लभ्यते ततोऽपि संहार इत्यनादित्वम्। स च संहारः कथं भवतीत्याह * महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः * इति। तेषां शरीरेन्द्रियाणामारम्भकेष्वणुषु द्रव्यारम्भकसंयोगनिवृत्तौ द्व्यणुकविनाशे तदारब्ध-

स्यापि निवृत्तिरित्याह महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः, परमाणुर्यावत् तावद् विनाश इति। द्रव्यारम्भकसंयोगनिवृत्तिः स्वकारणाणुविभागेभ्यः ते च महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः। तथाहि, महेश्वरेच्छा निमित्तकारणम्। आत्मनाम् अणुभिः संयोगश्च असमवायिकारणम्। अणवस्तु समवायिन इत्यणुषु कर्माण्युत्पद्यन्ते। कस्मिन्नवसर इत्याह [* सर्वात्मगतादृष्टानाम् *] सर्वात्मसु गताश्च तेऽदृष्टाश्च तेषाम्। किंविशिष्टानाम्? [* शरीरेन्द्रियमहाभूतोपनिबन्धकानाम् *] शरीरेन्द्रियमहाभूतान्युपनिबध्यन्ते सम्पाद्यन्ते यैस्तेषाम्। वृत्तिः फलदानसामर्थ्यम्। तस्योपभोगाद् युगपन्निरोधे विनाशे सति। स च * सञ्जिहीर्षासमकालम् *। यदा हि सकलभुवनपतेर्महेश्वरस्य संहर्तुमिच्छा सम्पद्यते। सा च किमर्थम्? [* संसारखिन्नानाम् *] प्राणिनां संसारे शरीरोपादानपरित्यागद्वारेण खिन्नानां निशि रात्राविव विश्रामार्थम्। यथा हि शरीरव्यापारादहनि खिन्नानां तदभावाद् रात्रौ विश्रामस्तथेहापीति।

कदा च सञ्जिहीर्षा? * ब्रह्मणोऽपवर्गकाले *। यदा हि अधिकारसमाप्तौ ब्रह्मा अपवृज्यते। स च वर्षशतावसाने वर्तमानस्य ब्रह्मणो भवतीति। केन मानेनेत्याह [* ब्राह्मेण *]। ब्रह्मण इदं ब्राह्मं तेनेति। तत्पुनः

दिव्यं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम्।
एतत् सहस्रपर्यन्तं तदहर्ब्राह्ममुच्यते॥

इत्येवंविधैर्दिनैर्मासादयोऽपि वक्तव्या इति मानम्।

एवं यथा ब्रह्मणोऽपवर्गकाले महेश्वरस्य सञ्जिहीर्षासमकालं विशिष्टादृष्टानां वृत्तिनिरोधे सति शरीरेन्द्रियाणां विनाशस्तथा * पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेण * इति।

परमाणुषु कर्मोत्पत्तौ विभागेभ्यः सत्संयोगनिवृत्तिद्वारेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाश इत्युत्पत्त्यपेक्षया। यद् यत् पूर्वमुत्पन्नं तत्तद् उत्तरस्मिन्नुत्तरस्मिन् विद्यमाने सति विनश्यतीति। तथाहि, उत्तरस्मिन् सति पूर्वं वायोर्विनाशस्तदनन्तरमुदकस्येत्यादि।

अन्ये तु एतद्वाक्यं पाठापेक्षयैव विवक्षितमिति मन्यन्ते। तथाहि, यथा शरीरेन्द्रियाणां विनाशस्तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानां विनाशोऽनेनैव क्रमेणेति पाठक्रमेण, न क्रमान्तरेणेति। एवञ्च शरीरेन्द्रियमहाभूतानां विनाशे तदा

श्रितानां गुणकर्मणामपि विनाशः। ततः प्रविभक्ताः कार्यानाधाराः परमाणवोऽवतिष्ठन्ते। तथा न परं परमाणवो धर्माधर्मसंस्कारैरनुविद्धाः सम्बद्धा आत्मानश्चावतिष्ठन्ते।

अथान्येषामपि सामान्यादीनामवस्थाने किमर्थं विशेषाभिधानमिति चेत्, द्रव्यविनाशस्य परमाण्वन्तताज्ञापनार्थम्। आत्मनाञ्च धर्मादिविनाशकारण [त्वा] भावाद् धर्माधर्मसंस्कारानुविद्धानामवस्थानम्, न केवलानामिति। अन्यथा हि निमित्ताभावात् पुनरुत्पत्तिर्न स्यात्।

अथ कियन्तं कालमेवमवस्थानमित्याह * तावन्तमेव कालम् * इति। ब्राह्मेण मानेन वर्षशतं यावदिति।

ततः पुनर्वर्षशतान्तेऽपि विश्रामप्रापकादृष्टनिवृत्तौ प्राणिनां कर्मविपाकोपलम्भात् * भोगभूतये * भोगभूत्यर्थम्। महेश्वरस्य * सिसृक्षा * स्रष्टुमिच्छा सम्पद्यते। तदनन्तरं पवनपरमाणुषु समवेतानि कर्माण्युत्पद्यन्ते। केभ्यः कारणेभ्य इत्याह * तत्संयोगेभ्यः *। तेषां भोगिनां संयोगाः परमाणुभिस्तेभ्य इत्यसमवायिकारणनिर्देशः। ते च कर्मारम्भे सापेक्षा इत्याह * सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यः * इति। सर्वात्मसु भोगिषु गताः सर्वात्मगतास्ते च ते वृत्तिलब्धादृष्टाश्चेति। वृत्त्या सहकारिकारणेन लब्धाश्च तेऽदृष्टाश्चेति तथोक्तास्तानपेक्ष्यन्त इति तदपेक्षास्तेभ्य इति। न तु वृत्तिर्लब्धा यैरिति व्याख्यानम्, अत्र निष्ठान्तस्य पूर्वनिपातप्रसङ्गात्।

अथ कासौ वृत्तिरदृष्टानां सहकारिकारणम्?: विश्रामप्रापकादृष्टाभावोपलक्षितः कालविशेषः, तत्सद्भावे कार्यकरणात्। तथाहि, ब्राह्ममानेनापरिपूर्णे वर्षशते विश्रामप्रापकादृष्टस्य प्रतिबन्धकस्य भावादुपभोगप्रापकादृष्टसद्भावेऽपि सृष्टिर्न भवति। परिपूर्णे तु वर्षशते विशिष्टादृष्टाभावादुपभोगप्रापकादृष्टानां सृष्टचै व्यापार इति प्रतिबन्धकाभावविशिष्टः कालो वृत्तिस्तेषामिति ज्ञायते। महेश्वरस्यापि तत्सद्भाव एव सिसृक्षा भवतीति।

तदेवं पवनपरमाणुषु कार्योत्पत्तौ सत्यामनन्तरं विभागः। तस्मात् संयोगनिवृत्तौ तेषां परमाणूनां परस्परसंयोगेभ्यो द्वचणुकान्युत्पन्नानि त्र्यणुकान्यारभन्त इत्यादिक्रमेण महान् वायुः समुत्पन्नो नभस्याकाशे दोधूयमान इत्यतिशयेन कम्पमानस्तिष्ठति। स चादावुत्पन्नोऽतिशयवेगसम्बन्धाद् गुरुत्ववतामपातहेतुर्भवति। दृष्टश्च वायोः पर्णादि-

[पतन] प्रतिबन्धे सामर्थ्यम्। अयश्चातिशयेन महत्त्वे सति वेगसम्बन्धाद् उदधिसहितां पृथिवीं तृणमिव धारयत इति न चित्रम्।

* तदनन्तरम् * वायूत्पत्त्यनन्तरम्, * तस्मिन्नेव * वायावधिकरणभूत एवेति। * आप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण * इति। कर्मोत्पत्तिद्वारेण विभागेभ्यः संयोगनिवृत्तौ परस्परसंयोगेभ्यो द्व्यणुकान्युत्पद्यन्ते, ततस्त्र्यणुकमिति क्रमेण। * महान् सलिलनिधिः * समुद्रः समुत्पन्नः, * पोप्लूयमानः * अत्यर्थं प्लवमानस्तिष्ठति।

* तदनन्तरम् * सलिलोत्पत्त्यनन्तरम्, * तस्मिन् * सलिलनिधावधिकरणे, * पार्थिवेभ्यः परमाणुभ्यः * पूर्वक्रमेण द्व्यणुकत्र्यणुकोत्पत्तिरिति। एवमादिक्रमेण महापृथिवी समुत्पद्यते। सा चोत्पन्ना * संहतावतिष्ठते *।

* तस्मिन्नेव महोदधौ * अधिकरणे तैजसेभ्यः परमाणुभ्यः पूर्ववद् द्व्यणुकोत्पत्तिक्रमेणोत्पद्यते महांस्तेजोराशिः। स चोत्पन्नो देदीप्यमानोऽत्यर्थं प्रकाशमानस्तिष्ठति। न च तेजसो जलेन विरोधादाधाराधेयभावानुपपत्तिरिति वाच्यम्। आधाराधेयभावस्याप्युपलब्धेर्यथा वाडववरुणाविति।

अन्ये तु विरोधपरिहारार्थं तस्मिन्नेव महोदधाविति वाक्यं पृथिव्यां सम्बन्धयन्ति। तदनन्तरं तस्मिन् पृथिव्युत्पादे सति तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिप्रक्रमेण महांस्तेजोराशिरिति।

पूर्वमनेन * एवम् * उक्तप्रकारेण। * समुत्पन्नेषु चतुर्षु महाभूतेषु * सत्सु। * महेश्वरस्याभिध्यानमात्रात् * इच्छामात्रात्, न शरीरादिव्यापारादिति। तथा तत एव निमित्तात् तैजसेभ्यः परमाणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते। किंविशिष्टम्? महदिति। अत्र हि तैजसाः परमाणवः समवायिकारणम्, तत्संयोगाश्चासमवायिकारणम्, पार्थिवावयवाश्च निमित्तकारणं महेश्वराभिध्यानञ्चेति। द्व्यणुकान्युत्पन्नानि त्र्यणुकादिप्रक्रमेण महदण्डमारभन्त इति। तस्मिंश्च अण्डान्तर्देशे ब्रह्माणमुत्पादयति।

किंविशिष्टमित्याह * चतुर्वदनकमलम् * इति। चत्वारि कमलानीव वदनानि यस्यासौ तथोक्तस्तमिति। सर्वेषाञ्च लोकानां भूरादिसत्यान्तानां पितामहं स्वामिनम्। तथा सकलभुवनैः सहितञ्चेति। तमुत्पाद्य महेश्वरः प्रजासर्गे विनियुङ्क्ते ब्रह्मन्! प्रजासर्गं कुर्विति।

* स च महेश्वरेण विनियुक्तो ब्रह्मा * अतिशयेन ज्ञानञ्च, वैराग्यं च ऐश्वर्यञ्चेति तथोक्तानि तैः सम्पन्नो युक्तोऽत एव * प्राणिनां कर्मविपाकं विदित्वा सुतान् * सृजति। किंविशिष्टान् ? * प्रजापतीन् * प्रजायाः स्वामिनः, कर्मानुरूपं ज्ञानञ्च भोगश्चायुश्च येषां ते तथोक्तान् * कर्मानुरूपज्ञानभोगायुषः * इति। तथा मनसि भवान् मानसान् मनोव्यापारेण सङ्कल्पमात्रेण सम्पादितान् न कायिकव्यापारेणेत्यतस्तानिति। तथा मनवश्च देवाश्च ऋषयश्च पितरश्चेति तथोक्तास्तेषां गणाः समूहास्तांश्च सृजति। तथा हि चतुरो वर्णान् ब्राह्मणक्षत्रियविश्शूद्रान् कर्मानुरूपभोगज्ञानायुषः सृजति। केभ्य इत्याह * मुखबाहूरुपादतः * यथासङ्ख्यमिति। तथा * अन्यानि चोच्चावचानि * उत्तमाधमभावेनावस्थितानि भूतानि सृजति। एतांश्च पूर्वोक्तान् * सृष्ट्वाशयानुरूपै-र्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति* यस्य हि यादृशं कर्म तस्य तादृशानि धर्मज्ञान-वैराग्यैश्वर्याणि सम्पादयतीति।

## ईश्वरसिद्धौ शङ्का तत्समाधानञ्च

ननु सर्वमेतदसम्बद्धम्, ईश्वरसद्भावे प्रमाणासम्भवात्। तन्न। अनुमाना-गमाभ्यां तत्सद्भावसिद्धेः। तथा चानुमानम्, क्षित्यादिषु सृष्टिसंहारौ, कर्तृपूर्वकाविति। अथ सृष्टिसंहारयोर्भूतेष्वप्रसिद्धेरनुमानाभाव इति चेत्, रचनावत्त्वेन तत्सिद्धेः। तथाहि, क्षित्यादीनि, कार्याणि, रचनावत्त्वात्, यद् यद् रचनावत् तत्तत् कार्यम्, यथा घटादि, तथा रचनावत् क्षित्यादि, तस्मात् कार्यमिति।

न च रचनावत्त्वमन्तरेणापि कार्यत्वमुपलभ्यत इत्यप्रयोजकत्वं वाच्यम्। सर्वस्यापि सपक्षैकदेशे वर्तमानस्यागमकत्वप्रसङ्गात्। तथाहि धूमस्याप्यप्रयोजकत्वं तदन्तरेणापि अग्निमत्त्वोपलब्धेः। अथ यत्र धूमस्तत्राग्निरिति व्याप्तिः? एवं तर्हि यत्र रचनावत्त्वं तत्र कार्यत्वमिति समानम्। तथा च घटादावप्यभूत्वा भावित्वं प्रत्यक्षेणानुपलब्धञ्च रचनावत्त्वेनैव साध्यते, तथेदं संहारेऽपि समानमिति। सिद्धे च कार्यत्वे कर्तृपूर्वकत्वञ्च साध्यते। तथा च विवादास्पदं बोधाधारकारणं [ ? णकम् ], कार्यत्वात्, यद् यत् कार्यं तत्तद् बोधाधारकारणं [ ? णकं ] यथा घटादि, तथा चेदं कार्यम्, तस्माद् बोधाधारकारण [? क] मिति। अस्य च पक्षधर्मत्वे सति सपक्षे वर्तमानस्य विपक्षादत्यन्तं व्यावृत्तेरबाधितविषयत्वाद् असत्प्रतिपक्षत्वेन गमकत्वम्।

नन्वेवम् अशेषज्ञेयज्ञानाधारविधातृपूर्वकत्वे साध्ये साध्यविकलो दृष्टान्तः कुम्भादावसर्वज्ञपूर्वकत्वेन व्याप्तस्य कार्यत्वस्योपलब्धेः। तथा विरुद्धश्च हेतुः। न विवादास्पदं सर्वज्ञपूर्वकम्, कार्यत्वाद्, घटवत्। असर्वज्ञपूर्वकत्वे च साध्येऽभिप्रेतस्यासिद्धिरिति।

नैतदेवम्। बोधाधारेऽधिष्ठातरि साध्ये न साध्यविकलत्वम्, नापि विरुद्धत्वम्। न च कार्यत्वं बुद्धिमन्तमधिष्ठातारं व्यभिचरतीत्यव्यभिचारोपलम्भसामर्थ्याद् उपलभ्यमानं पक्षे क्षित्यादिसम्पादनसमर्थमेव अधिष्ठातारं साधयतीति। न च क्षित्याद्युपादानोपकरणानभिज्ञः क्षित्यादिसम्पादनसमर्थ इति परमाण्वादिविषयज्ञानं तत्कर्तुर्लभ्यते। पक्षधर्मताप्रसादात् सर्वश्चानुमानं सामान्येन व्याप्तिग्रहणबलात् प्रवर्तमानं पक्षधर्मताबलात् साध्यविशेषं साधयतीति दृष्टम्। न च विस्फूर्जतापि परेणात्र बोधाधारकारण [क] त्वकार्यत्वयोः सामान्यव्याप्तेर्व्याघातः शक्यासाधनः। विशेषेण तु व्याप्तिविरहादसाधनत्वे धूमस्याप्यसाधनत्वप्रसङ्गः। तत्राप्यपास्ताशेषविशेषेणाग्निमात्रेण धूममात्रव्याप्तेरुपलम्भादिति। तथा चात्रापि विशेषविरोधः सम्भवत्येव। अयं पर्वतः, पर्वतावष्टब्धाग्निमान्. न भवति, धूमवत्त्वात्, यो यो धूमवान् स स विशिष्टाग्निमान् न भवति यथा रसवतीप्रदेशः, तथा चायम्, तस्माद् यथोक्तसाध्य इति।

अथ धूमस्याग्निमात्रेण व्याप्तेरुपलम्भाद् यत्रोपलम्भस्तत्रैवाग्निस्तत्रैवाग्निप्रसाधकत्वाद् विरुद्धतानवकाश इति चेत्। इहापि समानम्। कार्यत्वस्य बुद्धिमता व्याप्तेरुपलम्भात् पक्षे तत्साधकत्वमिति। अथ धूमप्रदेशोऽग्निना व्याप्तो दृष्ट इति प्रदेशान्तरेऽप्यग्निमत्त्वं प्रसाधयतीति युक्तम्। नन्वेवं तर्हि कार्यत्वमपि यत्रोपलब्धं तदेवोत्पादनसमर्थेनैव कर्त्रा व्याप्तमिति पक्षेऽपि क्षित्यादिसम्पादनसमर्थं कर्तारं गमयेत्।

यच्चेदमनुमानं न विवादास्पदं सर्वज्ञपूर्वकमिति, तत्र विशेषप्रतिषेधस्य शेषाभ्युपगमे सामर्थ्योपलब्धेरसर्वज्ञपूर्वकत्वं स्यात्, कार्यत्वस्य कर्त्रव्यभिचारादिति। यश्चासौ असर्वज्ञः स यदि क्षित्युत्पादनसमर्थः संज्ञामात्रं भिद्येतेति। अथासमर्थः कथं क्षित्यादेः कर्ता।

अथ परस्य सर्वज्ञत्वविशेषः कार्यत्वेन हेतुनाभिप्रेतस्तत्प्रतिषेधार्थो विधिरसर्वज्ञपूर्वकमिति। तत्र विशेषप्रतिषेधस्य शेषा [भ्यनुज्ञा] भ्युपगमे सामर्थ्योपलब्धेर्विरुद्धानुमानं न

कर्तृमात्रस्येति चेत्, न। कथमत्र क्षित्यादिसम्पादनसामर्थ्ये संज्ञाभेदमात्रम्, असामर्थ्ये तु कार्यानुत्पत्तिरिति। दृष्टञ्च कार्यम्। तथा समस्तविशेषप्रतिषेधे निराधारस्य सामान्यस्याप्रसिद्धेर्निर्विषयत्वेनाप्रमाणताप्रसङ्गः। न चेदमप्रमाणं सामान्यव्याप्तेः प्रतिषेद्धुमशक्यत्वात्। अथ विशिष्टविशेषप्रतिषेधः? तदा विशेषाभ्यनुज्ञायां विशेषान्तरोपगमप्राप्तिः, वामेनाक्ष्णा न पश्यतीति यथा।

अथाग्निधूमयोः प्रत्यक्षेण सम्बन्धसिद्धेरनुमानप्रवृत्तिर्युक्ता, नैवमत्रेति चेत्, न। इहापि कार्यत्वस्याधिष्ठातृपूर्वकत्वेन सम्बन्धसिद्धेरनुमानं प्रवर्तत एव।

अथाग्निरनुमानाद् ऊर्ध्वमपि प्रत्यक्षो नैवम् ईश्वर इत्यनुमानं कथमिति चेत्, न। अत्यन्तपरोक्षस्यापि चक्षुरादेरुपलब्ध्यनुमेयत्वात्। अथात्र सामान्येन क्रियायाः कारणकार्यत्वोपलब्धेरनुमानम्, तर्हि कार्यत्वस्य सामान्येन कर्तृपूर्वकत्वोपलब्धेरनुमानमिति। अभ्युपपन्नश्च कार्यत्वस्य शरीरादिमता कर्त्रा व्याप्तत्वाद्, घटादौ तथाभूतस्यैवात्र सिद्धिरिति वाच्यम्। दृष्टान्तदार्ष्टान्तिकयोरुत्कर्षापकर्षेण प्रत्यवस्थानस्य सर्वानुमानोच्छेदकत्वात्। तथा ह्यविद्यमानस्य शरीरादेरापादनम् उत्कर्षः। विद्यमानस्य च सर्वज्ञत्वादेरपकर्षणम् अपकर्षः। न च सर्वे दृष्टान्तधर्मा दार्ष्टान्तिकेऽपि भवन्ति, अभेदे दृष्टान्तदार्ष्टान्तिकव्यवहारोच्छेदप्रसङ्गात्। न हि छिदिक्रियायाः करणं कुठारादि दृष्टमिति रूपोपलब्धिक्रियायामपि तथा भवति। यथा चात्रापास्तविशेषेण करणेन क्रियाया व्याप्तत्वादनुमानम् एवंमीश्वरानुमानेऽपि इत्यनुत्थानं जातिप्रयोगस्य।

एतेन यदाह,

कस्यचिद् हेतुमात्रस्य यद्यधिष्ठातृतोच्यते।
कर्मभिः सर्वबीजानां तत् सिद्धेः सिद्धसाधनम्॥ (श्लो.वा.सम्बन्धा० ७५)

इति, तदपास्तं भवति।

तथा हि बुद्धिमत्यधिष्ठातरि साध्ये कथमचेतनेन कर्मणा सिद्धसाधनम्? तस्याप्यचेतनतयाधिष्ठात्रपेक्षत्वात्। तथाहि, सर्वमचेतनं चेतनाधिष्ठितं प्रवर्तमानं दृष्टम्, यथा तन्त्वादि, तथा च कर्मादि। न चास्मदाद्यात्मैवाधिष्ठायकः, तस्य तद्विषयज्ञानाभावात्। तथा चास्मदाद्यात्मनो न कर्मविषयं ज्ञानमिन्द्रियजम्। नापि परमाण्वादिविषयम्।

न च तदभावे तस्य प्रेरकं [ ? कत्वं ] दृष्टम् । न चाचेतनस्याकस्मात् प्रवृत्तिरुपलब्धा । प्रवृत्तौ वा परिनिष्पन्नेऽपि कार्ये प्रवर्तेत, विवेकशून्यत्वात् ।

अथाचेतनात्मनाधिष्ठितं च क्षीरं प्रवर्तते ? तन्न । गोवत्सप्रयत्नाभावे मृतावस्थायामप्रवृत्तेः । सर्वञ्चास्मदाद्यनधिष्ठितं पक्षेऽन्तर्भूतमिति न साध्येनैव साधनस्य व्यभिचारः, सर्वानुमानोच्छेदप्रसङ्गात् । तथा च अचेतनान्यस्मदन्येनाधिष्ठितानि, कार्योत्पत्तौ बुद्धिमदधिष्ठितानि, अचेतनत्वात्, यद् यदचेतनं तत्तद् बुद्धिमताधिष्ठितं प्रवर्तमानं दृष्टम् यथा तन्त्वादि, तथा चैतानि, तस्माद् यथोक्तसाध्यानि ।

अथ कर्तुः शरीरादिमत्त्वोपलब्धेरीश्वरेऽपि तथाभावः, किमत्र साध्यते. यदि शरीरादिमत्त्वेऽपि क्षित्यादिकर्तृत्वमभ्युपगम्यते ? अथ शरीरादिमत्त्वाद् असर्वज्ञस्य न क्षित्यादिकर्तृत्वम् ? तर्हि कार्यस्य कर्तृव्यभिचाराद् अशरीरस्यैव कर्तृत्वमभ्युपेयम् । न च शरीरादिमत्त्वे प्रमाणमस्ति । अथ कर्तृत्वमेव प्रमाणम् । तद् व्याहतमेव । कर्तृत्वेन शरीरादिमत्त्वं शरीरादिमत्त्वाच्च क्षित्याद्यकर्तृत्वमिति ।

न चेदं स्वतन्त्रसाधनम्, आश्रयासिद्धत्वात् । तथा हि सिद्धे कर्तृसद्भावे कर्तृत्वस्य शरीरादिमत्त्वस्य च पक्षधर्मत्वं स्यात्, न चैतदभ्युपगतम् ।

अथ परेण क्षित्यादिकर्ताऽभ्युपगत इत्यनिष्टापादनमेतत् । न यदि प्रमाणायत्तस्तदुपगमस्तेनैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । न चैतस्यानेनैव बाधः स्यात्, तन्मूलत्वात् । अथ प्रमाणं विनैवाभ्युपगतः परेण ? तर्हि प्रमाणं विना प्रमेयस्यासिद्धेः किं विपरीतानुमानेन, तस्याश्रयासिद्धताप्रसङ्गात् । समानञ्चैतदन्येष्वपीश्वरप्रतिषेधहेतुष्विति ।

तथा शरीरसम्बन्धे सति नियतदेशतया युगपदनियतदेशं कार्यं न स्यात् । तत्तु दृष्टम् । अथैकमनियतदेशस्य कार्यस्योत्पत्त्या व्यापि शरीरं नित्यमतीन्द्रियञ्चेष्यते ? तन्न । दृष्टविपरीतत्वात् । परञ्चाशरीरस्यैव कर्तृत्वमभ्युपेयमिति । तथाहि, नित्यशरीरासम्भवात् । तच्छरीरं तत्सम्पाद्यमेवेति किं शरीरान्तरेण (विना चारभ्यते ?) । शरीरान्तराभ्युपगमे तद् अन्यशरीरयुक्तेन सम्पाद्यत इति शरीरपरम्परायामुपक्षीणत्वाद् भगवतो नान्यत्कार्यं प्रादुर्भवेदिति । अथ ( । ? ) शरीरस्यैव शरीरकर्तृत्वं तत्कार्यावसरेऽपि

न बाध्यत इति [ चेत् ], तथा [ सति ] संहारावस्थायां शरीरस्य नाशे पुनः सर्गादावशरीरस्याकर्तृत्वे कार्योत्पत्तिर्न स्यादित्यशरीरस्यैव कर्तृत्वमभ्युपगतम् [ ? भ्युपेयम् ] ।

अथ प्रयोजनापेक्षितया कर्तॄणां प्रवृत्तेरुपलम्भात् तदभावाच्चेश्वरे प्रवृत्त्यभाव इति चेत्, तदसत् । कार्यसद्भावेन कर्तृसद्भावसिद्धेः । तस्य च स्वयं परिपूर्णत्वात् परार्था प्रवृत्तिर्गम्यते । यद् वा प्रवृत्तिशीलत्वाद् भगवतो नायं पर्यनुयोग इति । यथा हि भास्वान् प्रकाशनशीलत्वात् पदार्थान् प्रकाशयति, एवमितरोऽपि कार्यकारणरूपत्वात् कार्यं करोतीति ;

अथाशरीरस्येच्छामात्रेण कथं प्रेरकत्वम् ? यथास्मदाद्यात्मनः शरीरादिप्रेरकत्वमिति । अथ सत्येव शरीरे प्रेर्यप्रेरकत्वम् ? इहापि सत्येव परमाणौ प्रेर्यप्रेरकत्वमिति समानम् ।

अथ सिसृक्षा सञ्जिहीर्षा वा महेश्वरस्य यदि नित्या, सततं कार्योत्पत्तिः । अथानित्या, सापीश्वरेच्छां विना न भवतीत्यपरमिच्छान्तरम्, तदप्यनित्यत्वादीश्वरेच्छाधीनम् इत्यनवस्थायां तत्सम्पादन एवोपक्षीणत्वाद् भगवतो न कार्यान्तरे व्यापारः स्यात् । अथेश्वरेच्छां विनापीश्वरेच्छा सम्पाद्यते तर्हि कार्यान्तरेऽप्येवमस्तु ।

अथ नित्यापि सहकारिप्राप्तौ कार्यं करोति । सहकारिणामपि नित्यत्वे सतत कार्योत्पत्तिः, अनित्यत्वे वा तानपि सहकारिणः सम्पादयन्ती सहकार्यन्तरमपेक्षते । तेषामप्यनित्यत्वे पुनः सहकार्यन्तरम् इत्यनवस्थायां पूर्वदोषानुषङ्गः ।

नैष दोषः । विनो [ ? चिरो ] त्पन्नादृष्टसद्भावे सतीच्छायाः कार्यकरणात् । तथाहि, सहकारिसम्पादनेऽन्यन्यं सहकारिणमपेक्षते, तत्राप्यन्यमित्यनादित्वं परिहारः । उक्तञ्चेच्छायाः सृष्टौ संहारे च सहकारितेति । तथा,

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः ॥**

( तै. आर. १०; नारा. पनि. खं ३।२ ) इत्यागमेन प्रसिद्धः ।

न च स्वरूपप्रतिपादकानामप्रामाण्यं प्रमाजनकत्वस्य सद्भावात् । तथाहि, प्रमाजनकत्वेन प्रमाणस्य प्रामाण्यम्, न प्रवृत्तिजनकत्वेन । तच्चेहाप्यस्त्येव । प्रवृत्ति-

निवृत्ती तु पुरुषस्य सुखदुःखसाधनत्वाद् व्यवसाये समर्थस्याथित्वाद् भवत इति ।

अथ विध्यङ्गत्वादमीषां प्राधान्यं न स्वरूपार्थत्वादिति चेत्, तदसत् । स्वार्थप्रतिपादकत्वेन विध्यङ्गत्वात् । तथाहि, स्तुतेः स्वार्थप्रतिपादकत्वेन प्रवर्तकत्वम्, निन्दायाश्च निवर्तकत्वम् । अन्यथा हि तदर्थापरिज्ञाने विहितप्रतिषिद्धेष्वविशेषेण प्रवृत्तिनिवृत्ती स्याताम् । तथा विधिवाक्यस्यापि स्वार्थप्रतिपादनद्वारेणैव पुरुषप्रेरकत्वं दृष्टम् । एवं स्वरूपपरेष्वपि वाक्येषु स्यात्, वाक्यरूपतया अविशेषाद् विशेषहेतोश्चाभावादिति ।

तथा स्वरूपार्थानामप्रामाण्ये 'मेध्या आपो दर्भाः पवित्रममेध्यं × × × × मशुचिः' इत्येवंरूपापरिज्ञाने विध्यङ्गतायामविशेषेण प्रवृत्तिनिवृत्तिप्रसङ्गः । न चैतदस्ति । मेध्येष्वेव प्रवर्तन्ते, अमेध्येषु च निवर्तन्त इत्युपलम्भात् । तदेवं स्वरूपार्थेभ्यो वाक्येभ्योऽर्थस्वरूपावबोधे सति इष्टे प्रवृत्तिदर्शनादनिष्टे च निवृत्तिरिति ज्ञायते, स्वरूपार्थानां प्रमाजनकत्वेन प्रवृत्तौ निवृत्तौ वा विधिसहकारित्वमिति । अपरिज्ञानेन तु प्रवृत्तावतिप्रसङ्गः ।

अथ स्वरूपार्थानां प्रामाण्ये 'ग्रावाणः प्लवन्ते' इत्यादीनामपि यथार्थता स्यात् । न । मुख्ये बाधकोपपत्तेः । यत्र हि मुख्ये बाधकं प्रमाणमस्ति तत्रोपचारः कल्प्यते । तदभावे तु प्रामाण्यमेव । न चेश्वरसद्भावप्रतिपादकेष्वस्ति किञ्चिद् बाधकमिति । तदेवं सृष्टिसंहारप्रतिपादकानामपि वाक्यानां स्वरूपेऽर्थे प्रामाण्याद् विपरीतार्थकल्पना अन्याय्येति ।

एतेन शाक्यपक्षोऽपि प्रतिषिद्ध एव । तथाहि, शाक्या अपि दृष्टान्तदार्ष्टान्तिकयोरुत्कर्षापकर्षेण प्रत्यधि [ ? व ] तिष्ठन्ते । तत्र चोक्तमेव प्रतिसाध [? समाधा] नमिति । तच्च जात्युत्तरम् । यत् कार्यं यादृशकर्त्रा व्याप्तमुपलब्धं यदुपलब्धेरेतत्क्रियादर्शिनः 'केनाप्येतत् सम्पादितम्' इति बुद्धिर्भवति, तदेवोपलभ्यमानं तादृशमेव कर्त्तारं गमयेत् । तदुक्तम्,

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादितद्युक्तं तस्माद् यदनुमीयते ॥ ( प्र. वा. १।१३ )

न च क्षित्यादिकार्यं कर्त्रविनाभूतं दृष्टमिति कथं कर्तारं गमयेत् ? अथ सत्यपि भेदे कार्यशब्दसाम्यादनुमानम् ? एवं तर्हि धूमे पाण्डुत्वमग्निना व्याप्तमुपलब्धमिति प्रासाददेशादावप्युपलभ्यमानमग्निं गमयेत् । तदुक्तम्,

वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः ।
न युक्तानुमितिः पाण्डुद्रव्यादिव हुताशने ॥ ( प्र. वा. १।१४ )

यदि किञ्चित् कार्यं कर्त्रविनाभूतं दृष्टमित्यपरिदृष्टाविनाभावस्यापि तत्पूर्वकत्वं स्यात् । तथा सति घटादेर्मृद्विकारस्य कुलालपूर्वकत्वोपलम्भाद् वल्मीकादीनामपि तत्पूर्वकत्वं स्यात् । तदुक्तम्,

अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः करणात् सिध्येद् वल्मीकस्यापि तत्कृतिः ॥ (प्र. वा. १।१५)

कथं तर्हीदं क्षित्यादिकार्यं कर्मजमिति, कथं हि कर्मजं जगतां वैचित्र्यमित्युक्तम् ? तच्च चेतना मानसं कर्मेति न विज्ञानादर्थान्तरमिति ।

सर्वमेतदसम्बद्धम् । सामान्येन कार्यत्वस्य [ कर्तृव्याप्यत्वं ], बुद्धिमता व्याप्तेरुपलम्भात् क्षितावपि तत्सिद्धेः । सर्वश्चानुमानमन्य [ त्र ] सामान्येन व्याप्तिग्रहणापेक्षं प्रवर्तत इत्युक्तम् । न किञ्चिदप्यनुमानं पक्षे व्याप्तिग्रहणापेक्षं सम्भवतीत्यदूषणमेतत् । क्षित्यादिकार्यं न कर्तृव्याप्त्यनुपलब्धमिति । न चेत्थम्भूतं कार्यं कर्तृ ( ? र्त्रं ) विनाभूतं नोपलब्धमित्यनुमानाभाव इति वाच्यम्, सर्वानुमानोच्छेदप्रसङ्गात् । तथाहि, कृतकत्वादनित्यत्वं शब्देऽभ्युपगतम् । अत्रापि शक्यते वक्तुं 'यत् शब्दे कृतकत्वं तन्नान्यत्रानित्यत्वाविनाभावितयोपलब्धम्' इत्यनुमानाभावः । अथ सामान्येन कृतकत्वानित्यत्वयोरन्यत्र व्याप्तिग्रहणे सत्यनुमानं न पक्षे इति चेत्, समानमीश्वरानुमानेऽपीति । न चात्र शब्दसामान्य [ ? साम्य ] मेव, कार्यत्वस्योभयत्राव्यभिचारिणः सद्भावात् । न चैवं पाण्डुत्वमग्नेर्गमकम्, तस्याग्निमन्तरेण सद्भावेन व्यभिचारित्वादिति । एवञ्च वल्मीकादावपि मृद्विकारत्वं न कुलालपूर्वकत्वे लिङ्गम्, व्यभिचारात् । तस्य हि प्राकारेष्टकादिष्वकुलालपूर्वकेष्वपि सद्भावात् ।

यच्चेदं कर्मजं जगतां वैचित्र्यमिति, तदिष्यत एव । यदि नामाचेतनत्वात् कर्म चेतनाधिष्ठितं कार्यकरणे प्रवर्तत इतीश्वरस्यापि सद्भावः परस्यापि [ ? कार्यस्यापि ] सद्भावः । यद्यपि चेतनेनैव कर्म तथापि नापि तस्य चिदाधारत्वं चेतनत्वमेव । न च तस्य बोधेन तादात्म्यमात्मगुणत्वस्य वक्ष्यमाणत्वात् । नापीदमेकशाखाप्रभवत्वानुमानेन तुल्यम् । तत्र ह्येकशाखाप्रभवत्वेन हेतुना फलान्तराणां पाके साध्ये प्रत्यक्षेण बाधोदयादप्रामाण्यं युक्तम्, न चैवमीश्वरानुमान इति ।

न च शरीरादिमत्त्वेन कर्तृत्वं व्याप्तमिति तदभावात् तस्याप्यभाव इति च वाच्यम्। कार्यानुमानस्य चाव्यभिचारित्वे कर्तृसद्भावसिद्धेः। न चात्र व्यापकानुपलब्धेर्बाधकत्वम्। अनुमानस्यानुमानान्तरेण बाधायोगात्। पूर्वानुमानेन च धर्मिसद्भावसिद्धावुपकृतविषयत्वम्, असिद्धौ वा न पक्षधर्मत्वम्।

अथ "नित्यस्याव्यतिरेकित्वात् सामर्थ्यञ्च दुरन्वयम्" (प्र. वा. १।२५) इत्यकर्तृकत्वमेवेश्वरस्य। तन्न। क्षणिकत्वप्रतिषेधस्य वक्ष्यमाणत्वात्। अयञ्चेश्वरवादोऽस्मद्गुरुभिर्विस्तरेणोक्त इति नेह प्रतन्यते।

**आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्त्याकाशं कालो दिगिति। तस्य गुणाः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः। तत्र शब्दः, प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वाद् अयावद्द्रव्यभावित्वाद् आश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः।**

**बाह्येन्द्रियप्रत्यक्षत्वाद् आत्मान्तरग्राह्यत्वाद् आत्मन्यसमवायाद् अहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः।**

**श्रोत्रग्राह्यत्वाद् विशेषगुणभावाच्च न दिक्कालमनसाम्।**

**पारिशेष्याद् गुणो भूत्वाकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गाविशेषादेकत्वं सिद्धम्। तदनुविधानात् पृथक्त्वम्। विभववचनात् परममहत्परिमाणम्। शब्दकारणवचनात् संयोगविभागाविति।**

**अतो गुणवत्त्वाद् अनाश्रितत्वाच्च द्रव्यम्। समानासमानजातीयकारणासम्भवाच्च नित्यम्। सर्वप्राणिनाञ्च शब्दोपलब्धौ निमित्तं श्रोत्रभावेन।**

**श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः शब्दनिमित्तोपभोग-**

**प्रापकधर्माधर्मोपनिबद्धः । तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद् बाधिर्यमिति ।**

इदानीमाकाशस्योद्देशवतो लक्षणपरीक्षार्थं प्रकरणम् * आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति * इति । एताश्च समुच्चयं विना आकाशादीनां लक्षणमित्याह * आकाशं कालो दिगिति * यथासंख्यम् । तथा हि 'इति' शब्दस्य प्रत्येकमभिसम्बन्धादाकाशमिति संज्ञा आकाशे, काल इति काले, दिक्संज्ञा दिशि, न तिस्रोऽप्येकस्मिन्निति ।

अथ कस्मादिमाः पारिभाषिक्यः ? द्रव्यगुणकर्मात्मकस्य निमित्तस्याभावात् । अथाकाशत्वादि सामान्यलक्षणं निमित्तं भविष्यतीत्याह * अपरजात्यभावे * इति । अपरा हि जातिर्द्रव्यत्वापेक्षयाकाशत्वकालत्वदिक्त्वरूपा, सा तु न सम्भवत्येव आकाशादेरेकत्वात्, सामान्यस्य च नानाधिष्ठानत्वादिति ।

न चाकाशादीनां पारिभाषिक्यस्तिस्रः संज्ञा भवन्तीति साधर्म्याभिधानं न सम्बद्धम् । वैधर्म्यावसरेण संज्ञानां परस्परव्यावृत्ततया वैधर्म्यरूपत्वाद्, एकत्राभिधानञ्च शास्त्रस्य सङ्ग्रहरूपत्वादिति । तथा चाकाशमिति संज्ञा अनादिकालप्रवाहायाता, नान्यत्र सम्भवतीत्यसाधारणत्वाल्लक्षणम् । एतच्च विशेषणमर्थाल्लभ्यते । तथा ह्याकाशम्, इतरस्माद् भिद्यते, अनादिकालप्रवाहायाताकाशशब्दवाच्यत्वात् । यस्त्वितरस्मादनाकाशादेर्न भिद्यते, न चासावेवम्, यथा क्षित्यादि न च तथाकाशः, तस्माद् भिद्यत इति ।

ननु पारिभाषिक्यः संज्ञा न सम्भवन्त्येव निमित्तचतुष्टयाभावस्येव निमित्तत्वाद् इति चेत् । तथाहि, यत्र द्रव्यगुणकर्मसामान्यात्मकं निमित्तं न सम्भवति तत्रैव प्रवर्तते नान्यत्रेति तदभावो निमित्तम् । नैतदेवम् । स्वानुरक्तप्रत्ययहेतोर्निमित्तस्यात्र विवक्षितत्वात् । यथा हि द्रव्यगुणसामान्यानुरक्तो दण्डीत्यादिव्यवहारस्तथा च नायमाकाशादिव्यवहारस्तदभावानुरक्त इति पारिभाषिक्य एव ।

पूर्वं हि द्रव्याणां समवायित्वं गुणत्वञ्चोक्तम् । तत्र कैर्गुणैर्गुणवत् ? केषामुत्पत्तौ समवायिकारणम् ? किञ्च गुणात्मकं लक्षणमित्याह * तस्य गुणाः शब्दसंख्या-

परिमाणपृथक्त्वसंयोगविभागाः * इति। एतैर्गुणैर्गुणवत्। अत्र केषाञ्चिदुत्पत्तौ समवायिकारणम्, शब्दश्चासाधारणत्वाल्लक्षणमिति।

ननु सर्वमेतदाश्रयासिद्धम्, आकाशसद्भावे प्रमाणाभावात्। न। प्रत्यक्षेणानुपलम्भेऽप्यनुमानेन सद्भावसिद्धेः। किमनुमानमित्याह * शब्दः * इति। तथाहि, शब्दः क्वचिदाश्रितः, गुणत्वाद्, यो यो गुणः स स क्वचिदाश्रितः, यथा रूपादिः, तथा चायं गुणः, तस्मादाश्रित इति।

अथ पृथिव्यादेर्गुणो भविष्यतीत्याह * न स्पर्शवद्विशेषगुणः * अस्मदादिप्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, यो योऽस्मदादिप्रत्यक्षत्वे सत्यकारणपूर्वकः स स स्पर्शवतां विशेषगुणो न भवति, यथा सुखादिः, तथा चायं यथोक्तसाधनः, तस्मात् स्पर्शवतां विशेषगुणो न भवतीति।

ननु चात्र विशेषगुणप्रतिषेधे साध्ये सामान्यगुणप्राप्तिः विशेषप्रतिषेधस्य शेषाभ्यनुज्ञायां सामर्थ्योपलब्धेः। अथ सामान्यगुणप्रतिषेधस्तथापि विशेषगुणप्राप्तिरिति। नैतदेवम्। प्रतियोग्यपेक्षत्वात् पक्षादिव्यवस्थायाः। तथाहि, परेण क्षित्यादिविशेषगुणत्वं शब्दस्याभ्युपगतं तस्यैव प्रतिषेधः, सामान्यगुणत्वञ्च नेष्टमेव। शेषाभ्यनुज्ञा तु यत्रोभयोः प्रमाणेन प्रसिद्धिस्तत्रैकप्रतिषेधेऽन्यस्याप्रतिषिद्धस्यावस्थानम्। यथा दर्शनं सव्येतरचक्षुर्भ्यां संपाद्यं दृष्टमित्येकप्रतिषेधेऽन्यस्याप्रतिषेधादवस्थानमिति। न चैवं शब्दस्य क्षित्यादिसामान्यगुणत्वं परस्य सिद्धमित्यदूषणमेतत्। अत एव यद्यपि संयोगविभागादेरस्मदादिप्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वम्, तथापि स्पर्शवद्विशेषगुणत्वं नास्तीति सपक्षेऽन्तर्भावादनैकान्तिकत्वाभावः। रूपादयश्च विपक्षास्ते च कारणगुणपूर्वका इति साधनशून्या एव। तथापि पार्थिवपरमाणुरूपादयोऽकारणगुणपूर्वकाः स्पर्शवतां विशेषगुणाश्चेति व्यभिचारः, तदर्थमस्मदादिप्रत्यक्षत्वे सतीति विशेषणम्। ते तु योगिनामेव प्रत्यक्षा इति। अस्मदादिप्रतिपादनाय शास्त्रस्यारम्भादस्मदादिविशेषणन्तु लभ्यते।

अन्ये तु संयोगादिभिर्व्यभिचारपरिहाराय शेषाभ्यनुज्ञा [ ? प्रतिज्ञा ] वाक्यादुद्वृत्य विशेषपदं हेतुपदेन सह सम्बन्धयन्ति। तथा हि न स्पर्शवतां गुणः शब्दः, अस्मदादिप्रत्यक्षत्वे विशेषगुणत्वे च सत्यकारणगुणपूर्वकत्वात्, सुखादिवत्, अत्र हि सामान्यतो विशेषयोगात् सामान्यप्रतिषेधाद् विशेषप्रतिषेधो भवत्येव, ब्राह्मण्यनिषेधाद्

वाजसनादिप्रतिषेधवदिति। अत्र च प्रतिज्ञावाक्ये समासान्तर्गतं पदं हेतुपदेन कथं सम्बद्ध्यत इति चिन्त्यम्।

नन्वकारणगुणपूर्वकत्वादिति हेतुरसिद्धः, परदृष्टया संयोगाद् विभागाच्छब्दाच्च कारणगुणाच्छब्दस्य निष्पत्त्यभ्युपगमात्। तथाहि, शब्दस्य कारणमाकाशं तद्गुणाश्च संयोगादयः कारणगुणास्ते कारणमस्येति कारणगुणपूर्वकत्वम्। नैवम्। अभिप्राया-परिज्ञानात्। तथा चायमर्थो विवक्षितः। समवायिकारणेषु गुणाः कारणगुणास्ते पूर्वं कारणं यस्य गुणस्यासौ कारणगुणपूर्वकः, यथा पटरूपादिस्तन्तुरूपादिपूर्वक इति। न चैवं शब्दस्य, आकाशस्याकार्यत्वेन समवायिकारणगुणाभावादिति।

अथ स्वदृष्टया कारणगुणपूर्वकत्वम्। तथा च भेरीशब्दस्तदवयवशब्दपूर्वकः तथा शङ्खशब्दश्चेति ? न। तेषामनुपलम्भात्। तथाहि, शङ्खशब्दकाले शङ्खावयवशब्दा नानुभूयन्त इति। यथा पटरूपानुभवकाले तन्तुरूपाणामनुभव इति।

अथाभिभूतत्वादनुपलम्भः ? न। तदस्तित्वे प्रमाणाभावात्। तथाहि, तदवयव-शब्दाश्चिरोत्पन्ना एवावयविनि शब्दमारभन्त इति न प्रमाणमस्ति। यदि वा अवयव-शब्दानामवयविशब्दैरभिभूतत्वाद् विद्यमानानामप्यनुपलम्भः, [ तदा ] तदभावे सति तदुपलम्भः स्यात्, रासभशब्दाभावे वीणाशब्दस्येव। यथा हि वाद्यमानायां वीणायां रासभसन्निधौ विद्यमानस्यापि वीणाशब्दस्याभिभवादनुपलम्भः पुनरभिभावकाभावा-दुपलम्भो दृष्टो न चैवमवयविशब्दानामस्ति संवेदनम्।

न च कारणगुणपूर्वकेषु कारणाभिभावकत्वं दृष्टं तथा शब्दाभिभवेऽपीति, [अपि] तु शब्दस्य [ तीव्रस्य ] ग्रहणान्मन्दस्याग्रहणमिति। न चावयविशब्दोपलम्भकाल एवावयवशब्दानामग्रहणं र्वमप्यनुपलम्भात्। यावद्द्रव्यभावित्वञ्च कारणगुण-पूर्वकाणाम्।

न च सत्यकार्यवादब वयवावयविशब्दानां सद्भावेऽपि व्यञ्जकाभावाद-नुपलम्भ इति वाच्यम्, तन्निषेधस्य वक्ष्यमाणत्वात्।

न चावयवशब्दानामवयविशब्दवैलक्षण्यादसमवायित्वं वाच्यम्। तस्य हि समानजातीयेष्वत्यन्तविजातीयेषु च दर्शनात्। यथा हि कारणगताद् रूपाच्छुक्लतमात् कार्ये तथाभूतं रूपम् एवं रसादिष्वपीति। तथात्यन्तविजातीयस्यासमवायिकारणत्वं

यथा प्रचयाख्यः संयोगः संख्या च परिमाणोत्पत्तौ। न चैवं शब्दः। तथा हि भेरीशब्दो गम्भीरः। तदवयवशब्दाश्च तद्विधर्माण इत्येवं शङ्खादिशब्देष्वप्यूह्यम्।

न च सर्वस्य सुखदुःखमोहात्मकत्वात् सुखादिदृष्टान्तात् साध्यसाधनमिति मन्तव्यम्, प्रधानवादप्रतिषेधात्, सुखादीनाञ्चात्मगुणत्वात्।

तथा न स्पर्शवतां गुणः शब्दः, अस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वात्, यो योऽस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावी स स स्पर्शवतां विशेषगुणो न भवति, यथा सुखादिः, तथा चायमस्मदादिप्रत्यक्षत्वे सत्ययावद्द्रव्यभावी, तस्मान्न स्पर्शवतां विशेषगुण इति। ये च स्पर्शवतां विशेषगुणास्तेऽस्मदादिप्रत्यक्षत्वे सति यावद्द्रव्यभाविनः, यथा रूपादयः। अत्रापि पार्थिवपरमाणुरूपादिव्यवच्छेदार्थमस्मदादिप्रत्यक्षत्वे सतीति पदम्। न च संयोगादिभिर्व्यभिचारः, पूर्वोक्तन्यायात्। नापि यावद्द्रव्यभावित्वं शब्दस्य, रूपादिवदप्रतीयमानत्वात्।

तथा *आश्रयादन्यत्रोपलब्धेश्च* इति हेत्वन्तरम्, 'च' समुच्चये। न परं पूर्वोक्ताभ्याम्, आश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः शब्द इति। ननु शब्दस्य यथाकाशमाश्रयस्तस्मादन्यत्रोपलब्धिरसिद्धा, तेनैवोपलम्भात्। न पराभ्युपगमेन भेर्यादिराश्रयशब्देनाभिधानात्। तथा हि भेरीशब्दस्तद्गुणो न भवति, ततोऽन्यत्रोपलभ्यमानत्वात्, यो यस्ततोऽन्यत्रोपलभ्यते स स तद्गुणो न भवति, यथा सुखादिः, यश्च तद्गुणः स तत्रैवोपलभ्यते यथा रूपादिः, न च तथा शब्दः, तस्मात् तद्गुणो न भवतीति। न च सिद्धमेतत्, शब्दस्य तत्रैवोपलम्भात्। यथा हि भेर्यां शब्द इति प्रतिभासो दृष्टो रूपवत्। न चान्यथा भवितुमर्हतीति।

न च श्रोत्रस्य तत्रासन्निधानम्, आहङ्कारिकत्वेन व्यापकस्य तत्र सद्भावात्। नापि सर्वशब्दानामुपलब्धिप्रसङ्गोऽदृष्टवशेन नियतदेश एव वृत्तेरात्मलाभादिति। अव्यापकस्य वा तद्देशं यावत् परिमाणाभ्युपगमः। यत्र चाश्रयप्रतिभासाभावस्तत्र शब्दस्यैव स्वाश्रयपरिमाणद्वारेण श्रोत्रदेशमागमनम्।

तदेतदसाम्प्रतम्। इह भेर्यां शब्द इति प्रतिभासस्य सन्तानानुमानद्वारेणाधिष्ठानदेश एव प्रतिभासात्।

ननु चात्र विशेषहेतोरभावान्निश्चयाभाव एव। किं तत्स्थस्यैव शब्दस्योपलम्भः सन्तानानुमितस्य वेति ? न तत्स्थस्यैवोपलम्भः, क्वचिदाश्रयवियुक्तस्यापि श्रोत्रदेशे प्रतिभासात् । न चैवं स्पर्शवतां गुणाश्च आश्रयवियुक्ता गृह्यन्त इति नासिद्धत्वं हेतोः ।

अथ स्पर्शवद्गुणत्वेऽपि गन्धस्येव तदाश्रयागमनादुपलम्भो भविष्यतीति चेत्, न । गन्धस्य स्पर्शवद्गुणत्वप्रसिद्धावाश्रयाविच्छेदेन घ्राणाधिष्ठानदेश एव प्रतिभासात् सूक्ष्मस्य तदाधारस्यागमनं युक्तम् । न चैवं शब्दस्य । तथा सूक्ष्मद्रव्याधारस्य भेरी-शब्दस्यागमनमेव न युक्तम्, भेर्यां समवेतस्योत्पादात् । न ह्यन्यत्र समवेतमन्यत्र समवैतीति । समवेत्यवादेन त्वागमनेऽपि तदवयवशब्दा भेरीशब्दाश्चेति प्रतिभास एव प्रसङ्गः, सूक्ष्मद्रव्यसमवायस्याविशेषात् ।

तथा भेरीदण्डाभिघाताद् भेर्यामुत्पन्नः शब्दो नागच्छत्येव, आश्रयस्य तत्रा-वस्थानात् । तदवयवेषु च सूक्ष्मेषु ये जाताः शब्दास्तदाश्रयस्यागमनादागच्छन्तीत्य-भ्युपगमे भेर्यादिगम्भीरध्वनेरश्रवणमेव स्यात् । न चाहङ्कारिकत्वाद् व्यापकस्य भेर्यादि-देशे वृत्तिर्घटत इति मन्तव्यम्, पूर्वमेवाहङ्कारिकत्वप्रतिषेधात् । न च श्रोत्रेण भेर्यादि-देशग्रहणं सम्भवतीति तदवच्छेदेन शब्दस्य ग्रहणाभावप्रसङ्गः ।

अथ प्रसिद्धसमयस्य शब्दश्रवणादाश्रयानुमाने सति 'अयं भेरीशब्दः' इत्यवच्छेदेन प्रतिभासत इति चेत् ? आयातस्तर्हि मदीयं पन्थानम् । कथम् ? शब्दश्रवणात् सन्तानद्वारेणाश्रयानुमितौ 'इह भेर्यां शब्दः' इति प्रतिभासाभ्युपगमात् ।

तदेवमाश्रयादन्यत्रोपलभ्यमानत्वान्न स्पर्शवद्विशेषगुणः शब्द इति सिद्धम् ।

तथैकस्मिन्नेव वाद्ये वाद्यमाने बहूनां षड्जादीनामुपलम्भान्न तद्गुणत्वम् । तथाहि, यद्यातोद्यगुणः स्याच्छब्दः कथं बहूनां शब्दानां समानेन्द्रियग्राह्याणामविभुनि द्रव्ये सद्भावः स्यात् ? अथ चित्ररूपवदेतत् स्यात्, न । तत्रैकरूपस्यारम्भात् । तथाहि, नानारूपाण्येकं कार्यमारभन्त इत्युक्तम् । न चैवं नानाशब्दैरेकः शब्द आरभ्यमाणो दृष्ट इति । न चात्र चित्ररूपवदेकस्मिन् काले चित्रशब्दप्रतिभासः सम्भवति, क्रमेण प्रतिभासनात् । तथा रूपादिवच्चित्रोत्पादेऽभ्युपगते युगपदुपलब्धिप्रसङ्गो न च

क्रमेणाभिव्यक्तिः, सद्भावे प्रमाणाभावादित्युक्तत्वात्। संयोगाच्च क्रमेणोत्पत्त्यभ्युपगमे शब्दस्य न स्पर्शवद्विशेषगुणत्वं तद्वैधर्म्यादित्यलमतिविस्तरेण।

ननु चात्र हेतूपन्यासानन्तरं प्रतिज्ञोपन्यासादवयवव्यत्यये किं प्रयोजनम्? शास्त्रे नायं नियम इत्युपदर्शनमेव। तथाहि, "अवयवविपर्यासवचनमप्राप्तकालम्" (न्या० सू० ५।२।११) नाम निग्रहस्थानं जल्प एव न शास्त्र इत्युपदर्शयति। उदाहरणाद्यवयवलाभार्थमित्यन्ये। तच्चेषद्व्यत्ययं विनाप्यर्थकथनादेव। तस्यानेकधाभ्युपगात्।

नन्वेकेनैव प्रमाणेनार्थस्य परिच्छेदादेकस्मिन्नर्थेऽनेकहेतूपन्यासो व्यर्थ एव। यद् वा प्रमाणान्तरोपन्यासान्यथानुपपत्त्या ज्ञायते न प्राक्तनस्यार्थपरिच्छेदे सामर्थ्यम्, अपूर्वार्थपरिच्छेदकत्वं वा, अधिगतार्थस्यानुवादकत्वात्। तथा ह्यधिगतेऽप्यर्थे प्रमाणान्तरप्रवृत्तावविश्रामप्रसङ्गः। तस्मादन्योऽन्यव्यावृत्तविषयत्वात् प्रमाणानामनेकहेतूपन्यासो परिज्ञानार्थंव। नैतदेवम्। सर्वत्र व्यवस्थानभ्युपगमात्। तथा ह्येकस्मिन्नेवार्थेऽनेकोपायदर्शनं शास्त्रे न दोषाय, तस्य हि परानुग्राहकत्वात्। तथा विभिन्नाभिप्रायाः प्रतिपाद्या इत्यनेकहेतूपन्यासात्। कश्चित् केनचिदल्पप्रयासेनैव प्रतिपद्यत इति। न चात्र कस्यचिदप्रामाण्यम् सर्वेषामपि प्रमाजनकत्वात्।

न च प्रमाणपरम्पराप्रसङ्गः परिच्छिन्नेऽप्यर्थेऽवश्यं प्रमाणान्तरोपन्यासानभ्युपगमात्। तथाहि, यत्र प्रमाणान्तरसद्भावस्तत्रैव तदपेक्षा, न तदभावेऽपीति। यथा शब्देनावगतेऽनुमानेनापि बुभुत्सिते, अनुमानेनाप्यधिगते प्रत्यक्षेणेति। तथा प्रत्यक्षेऽप्येकेन करणेनोपलब्धे पुनः करणान्तरेणेति। तथैकस्मिन् सुखसाधनेऽर्थेऽनेकप्रमाणप्रवृत्तौ सुखातिशयश्च प्रयोजनमिति।

न चानधिगतार्थगन्तृत्वं प्रमाणसामान्यलक्षणं प्रत्यभिज्ञानादेरप्रामाण्यप्रसङ्गात्। तथा ह्यधिगत एवार्थे प्रत्यभिज्ञानमनुमानञ्च प्रवर्तत इति वक्ष्यामः।

अथैकदेशवृत्तिविशेषगुणत्वात् क्षणिकविशेषगुणत्वाच्च सुखादिवदात्मगुणो भविष्यतीत्याह * न बाह्येन्द्रियप्रत्यक्षत्वात् * इत्यादि।

अथ प्राक्तनानुमानस्य निर्दुष्टतायामनुमानान्तरस्यानुत्थानमेव । न। आत्मगुणत्वे सति शब्दस्य श्रोत्रेणापरिच्छेदाद्, आश्रयासिद्धत्वमनुमानयोः। तथाहि, श्रोत्रमात्मा न भवति, अकर्तृत्वात् । नाप्यन्तःकरणमेव श्रोत्रम्, तस्य हि बहिःकरणत्वात्। अभ्युपगमे वा यावत् सुखाद्युपलब्धिस्तावच्छब्दोपलब्ध्या भवितव्यमिति बाधिर्यं न स्यात्।

अथ शब्दग्रहणमन्तःकरणस्योपरतव्यापारात् ? एवं तर्हि सुखदीनामग्रहणं स्यात्। न च करणं चक्षुराद्येकत्रोपरतव्यापारमन्यत्रार्थप्रकाशकं दृष्टम्। क्षित्यादिवायुपर्यन्तञ्च श्रोत्रं न भवत्येव घ्राणादिसम्पादने सामर्थ्यावधारणात्। दिक्कालयोश्च श्रोत्ररूपता न सम्भवत्येव, भौतिकत्वाद् बाह्येन्द्रियाणाम्। पारिशेष्यादन्यच्छ्रोत्रम् । तेन चात्मगुणस्य शब्दस्याग्रहणमेव स्यादित्याश्रयासिद्धत्वम्। गृह्यते च बाह्येन्द्रियेण शब्दस्तस्मादात्मगुणो न भवतीति। तथा च शब्दः, नात्मगुणः, बाह्येन्द्रियप्रत्यक्षत्वात्, यो यो बाह्येन्द्रियप्रत्यक्षः स स आत्मगुणो न भवति, यथा रूपादिः, तथा चायं बाह्येन्द्रियप्रत्यक्षः, तस्मादात्मगुणो न भवतीति । वैधर्म्येण तु सुखादयः। ततश्च नात्मगुणः शब्दः, आत्मान्तरग्राह्यत्वात्, रूपादिवत्। आत्मगुणाश्चात्मान्तरग्राह्या न भवन्ति, यथा सुखादयः।

ननु शब्दस्यात्मान्तरग्राह्यत्वं व्यक्त्यपेक्षया न सम्भवत्येव। तथा हि या शब्दव्यक्तिरेकस्मिन् श्रोत्रे समवेतोपजाता न सान्यत्रेति। जात्यपेक्षया तु सुखादेरप्यात्मान्तरग्राह्यत्वादित्यनैकान्तिकत्वम् । नैतदेवम्। येनात्मना क्रियते शब्दस्तस्मादन्येनापि गृह्यते। न चैवं सुखादिरिति। तथाहि, तीव्रतराभिघातादेका शब्दव्यक्तिर्महान्तमाकाशदेशं व्याप्योपजायत इत्यनेकैरुपलभ्यत एव। न चाव्याप्यवृत्तित्वेन विरोधः स्वाश्रयाव्यापकत्वात्। न च सन्तानाभ्युपगमो विरुध्यते तीव्रतरादिभेदभिन्नानां शब्दानामुत्पत्त्यभ्युपगमात् । तथा ह्यस्ति तीव्रतराभिघातादेका शब्दव्यक्तिर्महान्तमाकाशदेशं कल्पितं व्याप्योपजायते ततस्तीव्रतर इत्यादिक्रमेणानुभवात् । तथा व्यक्त्यपेक्षायामात्मान्तरग्राह्यत्वं न सम्भवतीति ब्रुवतः सन्तानाभ्युपगमादपसिद्धान्तप्रसङ्ग इति।

न च इतोऽप्यात्मगुणः शब्दः, आत्मन्यसमवेतत्वात्, रूपादिवत्, ये चात्मगुणास्ते तत्रैव समवेताः सुखादय इति। अथात्मन्यसमवेतत्वं साध्यान्न विशिष्यत इत्याह * अहङ्कारेण विभक्तग्रहणाच्च * इति। तथाहि, नात्मनि समवेतः शब्दः, अहङ्कारेण

विभक्तग्रहणाद्, रूपादिवत्। ते चात्मनिमित्तं विना न प्रवर्तन्त इति प्रयोगदर्शनादात्मोपकारित्वं निमित्तमिति कल्प्यते।

अथ दिक्कालमनसां गुणो भविष्यतीति तन्निषेधार्थमाह * श्रोत्रग्राह्यत्वात् * इत्यादि। तथा च शब्दो न दिक्कालमनसां गुणः, श्रोत्रग्राह्यत्वात्, यद् यच्छ्रोत्रग्राह्यं तत्तद् दिक्कालमनसां गुणो न भवति, यथा शब्दत्वादि, तथा च शब्दः श्रोत्रग्राह्यः, तस्माद् दिक्कालमनसां गुणो न भविष्यतीति। ये तु तद्गुणास्ते तु श्रोत्रग्राह्या न भवन्ति यथा संख्यादय इति। तथा च दिक्कालमनोव्यतिरिक्तस्य श्रोत्रस्य प्रतिपादनात्, तत्तद्गुणत्वे तेन ग्रहणाभावप्रसङ्गः। तथाहि, दिक्कालाभ्यां न सम्बद्धमिति तत्समवेतस्य शब्दस्याग्रहणम्।

मनसश्चाणुपरिमाणत्वात् तद्गुणत्वे गम्भीरध्वनेरश्रवणप्रसङ्गः। तदभावे च क्वचित् प्रदेशे शब्दस्यानुत्पत्तिः स्यात्। न च कार्येणैव कारणस्य तत्र सद्भावः, कार्यस्यान्यथापि भावात्। नापि विभुद्रव्यविशेषगुणानां सुखादीनामिव परमाणुविशेषगुणानामिन्द्रियेणोपलम्भो दृष्टः। परमाणुपरिमाणश्च मनः। तदेवं दिक्कालमनोगुणत्वे शब्दस्य श्रोत्रग्राह्यत्वं न स्यादिति। बाधकञ्चेदं * वैशेषिकगुणभावाच्च * इति। तथा विशेषगुण एव वैशेषिकस्तस्य भावादिति। तथाहि, दिक्कालमनसां पक्षीकरणे वैशेषिकगुणाभावोऽसिद्धः स्यादस्यैव [? स्य च] विशेषगुणत्वादिति व्यतिरेकमुखेनान्या हेतुर्व्याख्यायते। दिक्कालमनसां वैशेषिकगुणाभाव इत्युक्ते शब्दस्तु विशेषगुण इति हेतुर्लभ्यत एव। तथा च शब्दः, दिक्कालमनसां गुणो न भवति, विशेषगुणत्वात्। यो यो विशेषगुणः स स दिक्कालमनसां गुणो न भवति, यथा रूपादिः, तथा चायं विशेषगुणः, तस्मान्न दिक्कालमनसां गुणः शब्द इति।

अन्ये तु न दिक्कालमनसां गुणः शब्द इति साध्ये वैशेषिकगुणाभावः साध्यान्न विशिष्यत इति मन्यमानाः हेत्वन्तरं ब्रुवते। तथा हि न दिक्कालमनसां गुणः शब्दः, गुणत्वेन गुणिनो लिङ्गत्वात्, यो यो गुणत्वेन गुणिनो लिङ्गः स स दिक्कालमनसां गुणो न भवति, यथा सुखादयः, तथा चायं शब्दो गुणत्वेन गुणिनो लिङ्गः, तस्मात् तद्गुणो न भवतीति। ये तु दिक्कालयोर्लिङ्गं न ते गुणत्वेन गुणिनो लिङ्गम्, यथा पूर्वापरादिप्रत्यया युगपदादिप्रत्ययाश्चेति। ते हि तद्विशिष्टत्वात् तयोर्लिङ्गम्, गुणत्वेन चात्मनः।

तथा युगपदादिशब्दाः पूर्वापरादिशब्दाश्च यद्यपि तद्विशिष्टत्वात् तयोर्लिङ्गं तथापि गुणत्वेनाश्रयान्तरानुमापका इत्यलमतिविस्तरेण ।

मनोगुणत्वे चोक्तमेव दूषणमिति परिशेषाद् गुणो भूत्वाकाशस्याधिगमे परिच्छेदे कर्त्तव्ये लिङ्गमिति । परिशेषस्तु प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् । तदेवं साधनं व्यतिरेकाव्यभिचारेणैव विषयव्यवस्थापनायालम् । तथाहि, शब्दः, पृथिव्युदकज्वलनपवनदिक्कालात्ममनोव्यतिरिक्तद्रव्याश्रयः, तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणत्वात्, यस्तु तद्व्यतिरिक्ताश्रयो न भवति न चासौ तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणः, यथा रूपादिः, नच तथा शब्दः, तस्मात् तद्व्यतिरिक्तद्रव्याश्रयः शब्द इति सिद्धमाकाशम् । तत् किमेकम् उतानेकमित्याह * शब्दलिङ्गाविशेषादेकत्वं सिद्धम् * । शब्दो हि लिङ्गमाकाशस्य अविशिष्टतया नानात्वाप्रतिपादकमिति ।

नन्वसिद्धमविशिष्टत्वं विचित्रत्वाच्छब्दानाम् । तथाहि, कार्यवैचित्र्यं कारणवैचित्र्यं विना न स्यादिति तीव्रादिभेदभिन्नानां शब्दानां विचित्रेणैव कारणेन भवितव्यमिति नानात्वसिद्धिस्तदाश्रयस्य । यदि च कारणवैचित्र्यं विनापि कार्यवैचित्र्यमिष्येत, परमाणूनामपि चातुर्विध्यं न स्यात् । तत्राप्येकस्मादेव कारणाद् विचित्रं क्षित्यादिकार्यं भविष्यतीति । अथात्र [ ? अथ तत्र ] कार्यवैचित्र्येण कारणवैचित्र्यानुमानमिति चेत्, तच्छब्दवैचित्र्येऽपि समानमित्यलम् ।

तदसत् । सहकारिवैचित्र्येणापि शब्दवैचित्र्योपलब्धेर्न तदाश्रयस्य नानात्वम् । तथा च तीव्रतमादभिघातात् तीव्रतमः शब्दो मन्दाच्च मन्द इत्यादि । न च क्षित्यादावप्येवमस्त्विति वाच्यम् । तत्र हि चतुर्विधं कार्यमितरेतरव्यावृत्तादुपादानादुत्पद्यमानं दृष्टमिति तज्जातीयाः परमाणवश्चतुर्विधा एव प्रतीयन्ते । कार्यवैचित्र्यन्तु सामग्रीवैचित्र्यादेव । तत्र क्वचित् कारणभेदः, क्वचित् कर्मभेदोऽन्यस्य चेति यथासम्भवं ग्राह्यम् । अत्र कारणभेदेनापि शब्दवैचित्र्योपपत्तेर्न समवायिकारणाद् भेद इति सत्यम् । एतच्छब्दलिङ्गाविशिष्टत्वान्नानात्वाप्रतिपादन [ ? क ] मिति ।

अथ नानात्वाप्रसिद्धावप्येकत्वं प्रमाणं विना न सिद्ध्यतीत्यभिधेयं प्रमाणमिति चेत्, न । द्रव्यत्वादेव संख्यासद्भावसिद्धौ नानात्वे प्रमाणाभावादेकत्वमेव सिध्यतीति । तथा संख्यानन्तरं परिमाणमवसरप्राप्तं परित्यज्य क्रमातिक्रमेण [पृथक्त्व] निरूपणं कस्मा-

दित्याह * तदनुविधानात् * । तेनैकत्वेनानुविधानं साहचर्यम्, यत्र ह्येकत्वं तत्रावश्यमेकपृथक्त्वमिति । न त्वेवं परिमाणेऽपि तदनुविधानमस्त्येव । तथाहि, यत्रैकत्वं तत्रावश्यमेकपृथक्त्वं भवतीति विशेषानुविधानम् । न चैवं यत्रैकत्वं तत्रावश्यमणुत्वं स्थूलत्वं वेति विशेषानुविधानमस्तीति पूर्वं पृथक्त्वं निरूप्यते ।

तथा परममहत्परिमाणमाकाशे कुतः प्रमाणादित्याह * विभववचनात् * इति । "विभवान्महानाकाशस्तथा चात्मा, तदभावादणु मनः" ( वै० सू० ७।१।२२-२३ ) इति सूत्रे दर्शयति । विभवात् कारणाद् महानाकाश इति सामान्यशब्देनास्य अर्थात् परममहत्त्वं विवक्षितम् । तथा हि विभुनो द्रव्यस्य परममहत्त्वं सिद्धमात्मादाविति इहापि तथा साध्यते । आकाशम्, परममहद्, विभुत्वाद्, आत्मवदिति । सर्वेषाञ्चाविभूनां पक्षीकरणे केवलव्यतिरेकानुमानम् । आकाशादीनामात्मपर्यन्तानां परममहत्त्वं विभुत्वाद् इत्युक्ते येषान्तु परममहत्त्वं नास्ति न तेषां विभुत्वमिति व्यतिरेकः ।

अथ किमिदं विभुत्वम् ? सर्वमूर्त्तैः संयोग इति । अन्ये तु सर्वत्रोपजातानां शब्दानामाकाशे समवायस्तत्सद्भावेऽपूर्णोद्रेकता विभुत्वमिति मन्यन्ते । यद् वा अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात् परममहत्त्वमिति साध्यते । तथा * शब्दकारणवचनात् संयोगविभागाविति * "संयोगाद् विभागाच्छब्दाच्च शब्दनिष्पत्तिः" ( वै० सू० २।२।३० ) इति सूत्रं दर्शयति । तथाहि, संयोगविभागौ शब्दोत्पत्तेरसमवायिकारणमित्यभिधानादाकाशे समवायो लभ्यते । अन्यथा हि प्रत्यासत्तेरभावादसमवायिकारणत्वं न स्यात् । न चान्यदसमवायिकारणमस्तीति । यत एवं गुणवदाकाशमतो गुणवत्त्वादनाश्रितत्वाच्च द्रव्यं परमाणुवदिति । तथाहि, परमाणोर्गुणवत्त्वमनाश्रितत्वञ्च दृष्टं द्रव्यत्वञ्चास्ति, अद्रव्ये चैतन्न सम्भवतीति ।

अथ किमाकाशं नित्यम् उतानित्यमित्याह * समानासमानजातीयकारणाभावाच्च नित्यम् * । तथाहि, न समानजातीयं समवायिकारणम्, आकाशस्यैकत्वात् । नाप्यसमानजातीयमसमवायिकारणमस्ति, समानजातीयाभावेन तत्संयोगस्याप्यभावात् । न च समवाय्यसमवायिकारणं विना वस्तुभूतस्य कार्यस्योत्पत्तिः सम्भवतीत्यकार्यत्वान्नित्यत्वं सिद्धमाकाशस्य । अतश्च * सर्वप्राणिनां शब्दोपलब्धौ निमित्तम् * कारणम् । आकाशस्यैकत्वेऽप्यनेकार्थक्रियाकारित्वं दर्शयति । न च सत्तामात्रेणाकाशं शब्दोपलब्धेः

कारणम् । सर्वत्र सर्वप्राणिनामविशेषेण शब्दोपलब्धिप्रसङ्गः, सर्वशब्दानामाकाशे समवायाविशेषादत आह * श्रोत्रभावेन * श्रोत्रत्वेनेति ।

किं तच्छ्रोत्रमित्याह * श्रोत्रं पुनः श्रवणविवरसंज्ञको नभोदेशः * इति । श्रूयतेऽनेनेति श्रवणम् । तच्च तद्विवरञ्चेति तथोक्तम् । श्रवणविवरमिति संज्ञा यस्य नभोदेशस्यासौ श्रवणविवरसंज्ञकः कर्णशष्कुलीसंयोगोपलक्षित आकाश इति । तथा * शब्दनिमित्तोपभोगप्रापकधर्माधर्मोपनिबद्धः * इति । शब्दो निमित्तं यस्यासौ तथोक्तः, स चासावुपभोगश्च तं प्रापयत इति तत्प्रापकौ च तौ धर्माधर्मौ ताभ्यामुपनिबद्धः सहकृत इति ।

नन्वेवमपि कर्णशष्कुल्याकाशसंयोगोपलक्षितविशिष्टादृष्टोपगृहीतो नभोदेशस्तस्मादर्थान्तरं न भवतीति सर्वशब्दोपलब्धिः स्यात् ? नैतदेवम् । कर्णशष्कुलीसंयोगोपलक्षितस्य नभसः श्रोत्रत्वे तस्याप्यव्याप्यवृत्तितया न सर्वेषां ग्रहणम् । यद्यपि कर्णशष्कुलीसंयोगैकार्थसमवायित्वाच्छब्दानां तथापि विशिष्टप्रत्यासत्तेरभावादग्रहणम् । यो हि कर्णशष्कुलीसंयोगस्य सान्निध्यभाक् शब्दः स एवोपलभ्यते । न चैवं सर्वशब्दास्तेषामव्याप्यवृत्तित्वात् ।

न च कर्णशष्कुलीसंयोगावरुद्धनभोदेशव्यतिरिक्तदेशे सर्वेषामुत्पादनादग्रहणमेवेति वाच्यम् । शब्दोपलम्भान्यथानुपपत्त्या सन्तानन्यायेन श्रोत्रदेशमागतस्य प्रतिपाद्यमानत्वादित्यलम् ।

अथ कस्माद् बधिराणां कर्णशष्कुलीसंयोगावरुद्धनभोदेशसद्भावेऽपि शब्दाग्रहणम् ? सहकार्यभावादित्याह * तस्य च नित्यत्वे सत्युपभोगनिबन्धकः * [ इत्यादि ]. शब्दोपलब्धौ सहकारिणोऽदृष्टस्याभावाच्छब्दोपलब्धिर्न भवतीति बाधिर्यमुपपद्यत इति ।

**कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः । तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्ताभावाद् यदत्र निमित्तं स कालः । सर्वकार्याणाञ्चोत्पत्तिस्थितिविनाशहेतुस्तद्व्यपदेशात् । क्षणलवनिमेषकाष्ठाकलामुहूर्त्तयामाहोरात्रार्धमासमासर्त्त्वयन-**

**संवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः। तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः।**

**काललिङ्गाविशेषादेकत्वं सिद्धम्। तदनुविधानात् पृथक्त्वम्। कारणे काल इति वचनात् परममहत् परिमाणम्। कारणपरत्वादिति वचनात् संयोगः। तद्विनाशकत्वाद् विभाग इति। तस्याकाशवद् द्रव्यत्वनित्यत्वे सिद्धे। काललिङ्गाविशेषादञ्जसैकत्वेऽपि सर्वकार्याणामारम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदान् मणिवत् पाचकवद् वा नानात्वोपचार इति।**

इदानीमुद्देशवतः कालस्य लक्षणपरीक्षार्थं * कालः परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः * इत्यादि प्रकरणम्।

अत्र च कालसद्भावप्रतिपादकमेव लिङ्गमितरस्माद् भेदकं भवतीति मन्यमानो लक्षणान्तरं नावोचत्। तथा हि कालः, इतरस्माद् भिद्यते, परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गत्वात्, यस्तु न भिद्यते न चासावुक्तलिङ्गः, यथा क्षित्यादिः, न च तथा कालः, तस्माद् भिद्यत इति। व्यवहारो वा साध्यते, विवादगोचरतापन्नं द्रव्यं काल इति व्यवहर्त्तव्यं परापरव्यतिकरादिलिङ्गत्वादिति।

अथ प्रतिबन्धानुपलब्धेः कथमेतानि कालसद्भावे लिङ्गं भवन्ति? विशिष्टकार्यतया। विशिष्टं कार्यं विशिष्टात् कारणादुत्पद्यमानं दृष्टम्। परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययाश्च विशिष्टं कार्यमिति विशिष्टकारणपूर्वकत्वं साध्यते। तथा च परापरयोर्दिक्कृतयोर्व्यतिकरो विपर्ययो गृह्यते। यत्र हि दिग्विवक्षयोत्पन्नं परत्वं तत्रैवापरत्वम् यत्रैवापरत्वं तत्रैव परत्वमुत्पद्यमानं दृष्टमित्यर्थान्तरञ्च। व्यवहर्तृनिमित्ताद् व्यतिरेकः सम्भवतीति। तथा चाधमजातीये दिग्विवक्षया परस्मिन् स्थविरपिण्डे वलीपलितादिसान्निध्यमपेक्षमाणस्योत्कृष्टजातीयं युवानमवधिं कृत्वेतरस्मात् परो विप्रकृष्टोऽयमिति बुद्धिर्भवति, तामपेक्ष्य परेण कालप्रदेशेन योगात् परत्वमिति। स्थविरस्यावधिं कृत्वोत्कृष्टजातीये यूनि परदिग्भागव्यवस्थितेऽपि रूढश्मश्रुकार्कश्य-

मपेक्ष्यमाणस्य सन्निकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्यापरेण कालप्रदेशेन योगादपरत्वस्योत्पत्तिरिति।

अत्र दिक्सम्पादितपरत्ववैलक्षण्यान्न तदेव निमित्तम्, नापि निकृष्टजातीयतया जातिकृतं परत्वं सम्भवति। न च क्षित्यादेरन्यतमं निमित्तं सामर्थ्यानवधारणात्। यस्तु शिष्यते स काल इति।

नन्वेकस्मिन्नेव दिने पाकजोत्पत्तिन्यायेन पिण्डयोः समुत्पादात् कथं परत्वापरत्वम्? उत्पत्तेः प्रभृत्यादित्यपरिवर्तनापेक्षया। तथा हि जन्मनः प्रभृत्येकस्यादित्यपरिवर्तनानि भूयांसीति परत्वम्, अन्यस्य चाल्पीयांसीत्यपरत्वम्।

अथादित्यपरिवर्तनमेवास्तु, किं कालेनेति चेत्। न। युगपदादिप्रत्ययानुमेयत्वात्। न चादित्यपरिवर्तनादेव युगपदादिप्रत्ययाः सम्भवन्तीति। एकस्मिन्नेवादित्यपरिवर्तने सर्वेषामनुत्पादाद् व्यपदेशाभावाच्च। तथा हि युगपत्काल इति व्यपदेशो न युगपदादित्यपरिवर्तनमिति।

न च क्रियैव काल इति वाच्यम्। युगपदादिप्रत्ययाभावप्रसङ्गात्। तथाहि, क्रियायाः क्रियारूपतया विशेषाभ्युपगमादिति प्रत्ययाभावः, परापरव्यतिकराभावश्च। न च क्रिया काल इति प्रतीयते। यदि च कर्तृकर्मव्यतिरिक्ता विशिष्टप्रत्ययसम्पादिका क्रिया स्यात् संज्ञाभेदमात्रम्। अव्यतिरेके तु विशिष्टप्रत्ययाभाव एवेत्यलं विस्तरेण।

तथा युगपद्भावो यौगपद्यम्। बहूनां कर्तॄणां कार्यकरणे बहूनां कार्याणामात्मलाभ इति। तथा हि युगपदेते कुर्वन्तीति कर्त्रालम्बनं ज्ञानम्, युगपदेतानि कृतानीति कार्यालम्बनञ्च दृष्टम्। न चात्र कर्तृमात्रं कार्यमात्रञ्चालम्बनमतिप्रसङ्गात्। तथा हि यत्र क्रमेण कार्यं तत्रापि कर्तृकर्मणोः सद्भावात्। स्यादेतद् विज्ञानम्, न च कतरस्माद् विशिष्टं कर्तारं कार्यं वालम्ब्योत्पद्यते विज्ञानमेतदिति ज्ञायते। यच्च तद्विशेषणं क्षित्यादिविलक्षणं स काल इति न यौगपद्यायौगपद्यक्रम इति। अयुगपदेते कुर्वन्तीति कर्त्रालम्बनं ज्ञानम्, अयुगपदेतानि कृतानीति कार्यालम्बनं ज्ञानम्। अत्रापि विशिष्टयोः कर्तृकर्मणोरालम्बनत्वात् क्षित्यादिविलक्षणं निमित्तं वाच्यमिति कालसिद्धिः।

तथैक एव कर्ता किञ्चित् कार्यं चिरेण करोति व्यासङ्गाद् अनर्थित्वाद् वा किञ्चित् क्षिप्रं तदर्थितया। तत्र चिरेण कृतं क्षिप्रं कृतमिति प्रत्ययो विलक्षणत्वाद् विलक्षणं कारणमाक्षिपतीति। न च कार्यमेव निमित्तं तस्योभयत्र समानत्वात्। नापि कर्तैव, तस्यापि साधारणत्वात्। न च निर्निमित्तं कदाचिद् भवतीत्यतो विलक्षणेन निमित्तेन भवितव्यमित्यत आह * तेषाम् * युगपदादिप्रत्ययानाम्। * विषयेषु * कर्तृषु कार्येषु। किंविशिष्टानाम्? * पूर्वप्रत्ययविलक्षणानाम् * पूर्वप्रत्ययाः कर्तृकार्येषु तत्प्रत्ययाः, तद्विलक्षणानाम्। उत्पत्तावन्यस्य क्षित्यादिरूपस्य निमित्तस्यासम्भवाद् यन्निमित्तं स काल इति।

अथ कालस्यैकरूपतया विलक्षणप्रत्ययानामभावप्रसङ्ग एव। अथ क्रिया-वैलक्षण्याद् विलक्षणः कालस्तद्वैशिष्ट्याच्च प्रत्ययवैशिष्ट्यमिति चेत्। एवं तर्हि दुरुत्तरमितरेतराश्रयत्वम्। तथा हि क्रियायाः क्रियारूपतया विशेषाभावात् कथं कालविशेषकत्वम्? अथ युगपत् क्रियाविशेषितो युगपत् कालस्तद्विशेषिता च युगपत् क्रियेतीतरेतराश्रयत्वमेव।

नैतदेवम्। निर्विकल्पिकायां संविदि परस्परव्यावृत्तक्रियास्वरूपावगमे सति तद्विशिष्टः कालस्तस्माच्च युगपदादिप्रत्यया इत्युपगमात्। निर्विकल्पकाच्च सविकल्पोत्पत्तिरिष्यते। यद् वा स्वरूपेणैव क्रियाया विशिष्टत्वम्, तत्सहकारी कालो युगपदादिप्रत्ययसम्पादक इति। न चात्र विशेषणं कालः। किं तर्हि? विशिष्टकार्योत्पत्तौ विशिष्टेन निमित्तेन भवितव्यमिति।

अन्ये तु विशेषणत्वेन गृहीतस्य व्यापार इत्यनुमानादेर्व्यापारानुपलब्धेः, प्रमाणञ्च विना असम्भवादिति कालस्य प्रत्यक्षतां ब्रुवते। तथा हि विशेष्यज्ञानान्यथानुपपत्त्या विशेषणे ज्ञानं कल्प्यते। तच्च प्रमाणान्तरव्यापारानुपलब्धेः प्रत्यक्षमेव।

ननु सर्वेषामेव कारकाणां विशेष्यज्ञानोत्पत्तौ व्यापारविशेषेऽप्येकमेव विशेषणं नान्यदिति विशेषहेतुर्नास्तीति। न। स्वालम्बनज्ञानसहितस्य विशेष्यज्ञानोत्पत्तावेकस्यैव व्यापारात्, अयमेवानुरागः। स्वानुरक्तप्रत्ययजनकश्च विशेषणं नाकारार्पकम्, नापि स्वशब्दाभिलप्यज्ञानजनकम्, असम्भवात्। नहि स्वाकारार्पकत्वं विशेषणस्य,

आकारवादप्रतिषेधात्। नापि विशेषणशब्दाभिलप्यं विशेष्ये ज्ञानं सम्भवति, पुरुषे दण्ड इति ज्ञानानुत्पत्तेः।

अथ दण्डस्यातिशयाधायकत्वानुपपत्तेर्विशेषणत्वाभाव इति चेत्, न। विशिष्टज्ञानजनकत्वेनास्यैवातिशयत्वात्। तज्ज्ञानश्चातिशयः, तत्सद्भावे कार्यसद्भावात्।

अथ विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनत्वे न प्रमाणमस्तीति चेत्। तथाहि, विशेष्यज्ञानमुत्पत्तेः पूर्वं विशेषणस्य न तद्रूपतां दर्शयति न क्रमेण प्रमाणमिति। न च विभिन्नज्ञानालम्बनत्वं विशेषणविशेष्यभावेन व्याप्तम्। नापि विशेषणविशेष्यभावः क्रमेणेत्युभयथापि व्यभिचारात्। तथा हि लिङ्गलिङ्गिनोर्विभिन्नज्ञानालम्बनत्वेऽपि न विशेष्यविशेषणभाव इति व्यभिचारः। न च क्रमे साध्ये विशेषणविशेष्यभावो हेतुः, साधारणत्वात् तस्य सपक्षविपक्षाभ्यां व्यावृत्तेरिति। तथापि भिन्नज्ञानालम्बनत्वे विशेषणविशेष्ययोरनुमेयप्रतिपत्तेः प्रत्ययलक्षणत्वं स्यात्। तथाहि, अनुमानाद् गृहीतं विशेषणमिन्द्रियार्थसन्निकर्षेण सह व्यापारात् प्रत्यक्षसामग्र्यामन्तर्भूतमिति तज्जनिता प्रतिपत्तिरग्निमानेष देश इति प्रत्यक्षफला स्यात्।

न चाग्नेर्निराधारस्य पूर्वमनुमानं सम्भवति। तथाग्निरप्यनुमीयमानोऽग्नित्वविशिष्टः प्रतीयत इति पूर्वमग्नित्वग्रहणम्। तत्राप्यग्निर्विशेषणमित्यन्योन्याश्रयत्वम्। अथाग्नौ समवायोऽग्नित्वस्य विशेषणम्? तत्राप्यग्नित्वमग्निर्वा विशेषणमिति तदेव दूषणमविशिष्टस्य सर्वत्र सद्भावाद् विशेषकत्वानुपपत्तिः। अथ पर्वतोऽग्नेर्विशेषणम्? तत्रापि पर्वतत्वं तत्र च समवायो विशेषणमिति पूर्ववद् दूषणम्। अथाग्निसंयोगः पर्वतस्याग्नेश्च विशेषणम्? तस्यापि संयोगिनौ तयोरपि संयोग इति पूर्वदोषप्रसङ्गः। तस्मादनुमानं प्रमाणीकुर्वता विशेषणविशेष्यालम्बनमेकं विज्ञानमभ्युपेयम्। एवञ्च धूमविशिष्टस्य पर्वतस्योपलम्भादग्निविशिष्टे प्रतिपत्तिर्भवति।

अथैकज्ञानालम्बनयोरङ्गुल्योरिवैकज्ञानालम्बनपक्षे कथं विशेषणविशेष्यभावः? प्रधानोपसर्जनभावेन। स एव कस्मादिति चेत्? विभिन्नज्ञानालम्बनत्वेऽपि समानम्। तथाहि, इदं विशेषणमिदं विशेष्यमिति विभिन्नज्ञानालम्बनत्वाविशेषे कथं नियमः? प्रधानोपसर्जनभावादिति चेत्, इष्टम्, तदेकज्ञानालम्बनत्वेऽपीति दोषाभावात्।

अथैकश्चायं विशेषणविशेष्यभावो न धर्मपदार्थान्तर्गतः, तत्तद्व्यतिरेकप्रतिषेधात् । नापि द्रव्यादिपदार्थान्तर्गतः, षट्सूपलम्भादिति । न हि द्रव्यादीनामन्यतमः षट्सूपलभ्यत इति ।

अथ विशिष्टप्रत्ययहेतुरदृष्टो विशेषणविशेष्यभाव इति चेत् । तस्य चैकतायामिदं विशेषणमिदं विशेष्यमिति व्यवस्थानुपपत्तिः, विशेषणविशेष्यत्वस्यैकत्वादिति । तथा हि यदेव विशेषणत्वं तदेव विशेष्यत्वमित्येकस्य पुरुषस्यैकस्मिन्नेव काले तदेव विशेषणं विशेष्यञ्चेति स्यात् । न चैतदस्ति । तस्माद् विशिष्टादृष्टो न विशेषणविशेष्यभावः । अथ नैको दृष्टो विशेषणविशेष्यप्रतिनियतः ? तथापि विशेषणविशेष्ययोर्भावो न स्यात् ।

अतो यथासम्भवं विशेषणविशेष्यभावो ग्राह्यः, क्वचित् संयोगः, क्वचित् समवाय इति । तथा चाभावेऽपि विशेषचक्षुरादिसम्बन्ध एव विशेषणविशेष्यभावः, तेन सता च विशिष्टप्रत्ययजननात् । न चादृष्टस्यात्र कारणत्वं निषिध्यते, सकलकार्येषु साधारणत्वात् । नाप्यदृष्टो दृष्टकारणं प्रत्याचष्टे, शरीरादेरप्यभावप्रसङ्गात् । तथाहि सुखादिसम्पादकोऽदृष्ट एवास्त्वलं शरीरादिपरिकल्पनयेति । अथादृष्टसद्भावेऽपि शरीरादयो दृष्टत्वादभ्युपगम्यन्ते, तर्हि विशेष्यचक्षुरादिसम्बन्ध एव दृष्टत्वाद् विशेषणविशेष्यभावोऽभ्युपगन्तव्यः ।

अथ विशेषणे तस्यावृत्तेः कथं तद्भाव इति चेत्, न । अदृष्टवद् व्यापारापेक्षया तद्वृत्तित्वात् । अथैकज्ञानालम्बनत्वे 'सुरभि द्रव्यम्' इति विभिन्नेन्द्रियग्राह्ययोर्विशेषणविशेष्यभावो न स्यात् । न हि विभिन्नेन्द्रियाभ्यामेकं विज्ञानं सम्पाद्यं दृष्टमिति । न । विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनत्वे बाधकोपपत्तेरनुसन्धानज्ञानमेतत् । तथा हि घ्राणेन गन्धमुपलभ्य चक्षुषा स्पर्शनेन वा द्रव्यं पश्चान्मनसानुसंधत्ते 'सुरभि द्रव्यम्' इति । न च सर्वं विशेष्यज्ञानमनुसन्धानज्ञानमिति वाच्यम्, तत्र हि बाधकानुपपत्तेः । तथा विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनतायाम् 'एकदण्डिनमहमद्राक्षम्' इति स्मरणं न स्यात्, तस्य हि अनुभवरूपत्वात् ।

अथ पुरुषप्रत्ययसामानाधिकरण्याद् 'दण्डिनमानय' इत्यादिप्रयोगेषु पुरुषस्यैकक्रियासम्बन्धात् तदालम्बनमेव विशेष्यज्ञानमिति चेत्, न । पुरुषस्य विशेष्यतया प्राधान्यात् क्रियासम्बन्धः सामानाधिकरण्यञ्चोपपद्यत एवेत्यलमतिविस्तरेण ।

अन्ये त्वेकज्ञानालम्बनत्वे विशेषणविशेष्यभावो न स्यात्, तयोः करणकर्मरूपत्वादिति मन्यन्ते। तथाहि विशिष्यतेऽनेनेति विशेषणं करणम्। विशेष्यत इति विशेष्यं कर्म। तच्चैकज्ञानालम्बनतायां न स्यादुभयोः कर्मत्वादिति। नाप्यज्ञातव्यापारे सहकारित्वाविशेषाच्चक्षुरादिभ्यो विशेषः स्यादिति तज्ज्ञानं कल्प्यते। यदि च दण्डत्वविशिष्टो दण्डः पुरुषस्य विशेषणमिष्येत तस्याप्यन्यदित्यनवस्था। दण्डश्चेद् दण्डत्वस्य विशेषणमितरेतराश्रयत्वञ्च स्यादिति विशेष्यज्ञानाभावप्रसङ्गः। अस्ति च विशेष्यज्ञानमिति तदन्यथानुपपत्त्या विशेषणज्ञानमात्रं ज्ञायते।

यच्चेदं विशेष्यज्ञानमुत्पत्तेः पूर्वं विशेषणस्य [ न तद् ] रूपतां दर्शयतीत्युक्तम्, तत्र केयं विशेषणरूपतेति विचार्यम्। न हि दण्डे दण्डत्वादिवद् विशेषणरूपता प्रतिभाति। अथ स्वानुरक्तप्रत्ययजनकत्वं विशेषणत्वम्, तच्च यदि स्वालम्बनज्ञानसहितस्य विशेष्यज्ञानजनकत्वम्, अभ्युपगमव्याघातः। न चैकविज्ञानालम्बनत्वेऽनुरागार्थं पश्यामः, तच्छब्दाभिलप्यत्वादेः प्रतिषेधात्। नापि क्रमो विशेषणविशेष्यभावहेतुरनभ्युपगमात्। विशेष्यज्ञानन्तु विशेषणज्ञानं दर्शयत्येवान्यथा हि तद्विशिष्टत्वायोगात्। यच्चेदमनुमानादप्रतिपत्तेः प्रत्यक्षफलकत्वमिति। तच्चासत्। बाधकसद्भावेन अत्रैकज्ञानालम्बनत्वाभ्युपगमात्। न चैवं सर्वत्र बाधकमस्तीति।

अन्ये तु धूमोपलम्भानन्तरमग्न्यनुमाने सत्यग्निमानयं पर्वत इति ज्ञानं प्रत्यक्षमेवेति ब्रुवते, अन्यथा हि 'अयम्' इत्यपरोक्षतानिर्देशो न स्यात्। अत्र च साध्यधर्मविशिष्टधर्मिणः साध्यत्वे कथमेतत् साधनं स्यादिति वाच्यम्।

यच्चेदं विशेषणविशेष्यभावः किमेकोऽनेको वेति, तत्रैकत्वाभ्युपगमेऽपि न विशेषणविशेष्ययोरव्यवस्था, निमित्तान्तरस्यासाधारणस्य सद्भावात्। तथा हि विशेषणं स्वानुरक्तप्रत्ययोत्पादकत्वेनेत्युक्तम्, विशेष्यन्तु विशेष्यज्ञानविषयत्वेन, विशेषणविशेष्यभावस्तु परं विशेष्यज्ञानोत्पत्तौ सहकारी, न पुनर्व्यवस्थाकारणमिति।

न च संयोगसमवायावेव विशेषणविशेष्यभावः, तयोः समवायेऽभावे चाभावात्। अत्रापि विशेष्येन्द्रियसम्बन्धोऽस्तीति चेत्, न। तस्य विशेषणावृत्तित्वात्। नाप्यदृष्टवद् व्यापारापेक्षया तद्वृत्तित्वम्, संयोगसमवाययोरन्यत्रानुपलब्धेः। तथा हि संयोगसमवाय-

योर्यदि व्यापारापेक्षया विशेषणवृत्तित्वमिष्येत, विशेष्यसम्बन्धं विना अभावसमवाययोर्ग्रहणं स्यात्। यत्र हि तयोर्वृत्तिस्तत्रैव ग्रहणजनकत्वोपलब्धेः। अदृष्टस्य त्वात्मसमवेतस्यापि सकलकार्योत्पत्तौ साधारणत्वात्, संयोगादिसद्भावे तदभावे च केवलस्य व्यापारोऽभ्युपगम्यत एव। स चोभयत्र व्यापारापेक्षया सम्बद्ध इव सम्बद्धो न परमार्थतः।

न चोपचरितस्येन्द्रियसहकारित्वम्, अपरोक्षज्ञानस्यान्यथासम्भवेन तद्भावसिद्धेः। दृष्टञ्च श्रोत्रान्त्योपचरितस्यापि शब्दज्ञानसहकारित्वमिति। यच्चेदं 'सुरभि द्रव्यम्' इत्याद्यनुसन्धानज्ञानमित्युक्तम्, तदसत्। अन्यत्राप्येवं प्रसङ्गात्। न चात्र विभिन्नज्ञानालम्बनत्वे किञ्चिद् बाधकमस्तीति तदेवाभ्युपेयम्।

नापि 'दण्डिनमहमद्राक्षम्' इति स्मरणानुपपत्तिः, विशेषणज्ञानजनितसंस्कारस्य विशेष्यज्ञानसहकारिणः संस्कारारम्भेणापि तद्भावात्।

यच्चेदमेकज्ञानालम्बनत्वेऽपि विशेष्यस्य प्राधान्यात् क्रियासम्बन्धः, सामानाधिकरण्यञ्च घटत इति। तन्न। प्राधान्यस्यैव विचार्यत्वात्। एकज्ञानालम्बनतायां हि किं कृतं प्राधान्यमिति चिन्त्यम्। सामानाधिकरण्यन्त्वेकज्ञानालम्बनत्वाविशेषे पुरुषप्रत्ययेन न च दण्डप्रत्ययेनेति विशेषणहेत्वभावः।

अथ विभिन्नविशेषणनिमित्तयोरेकस्मिन्नर्थे वृत्तेः सामानाधिकरण्यम्, दण्डीति प्रत्यये दण्डो विशेषणं पुरुषे इति। न चैवं दण्डस्य विशेषणत्वेऽन्यद् विशेषणमस्तीति सामानाधिकरण्यम्। नैतदेवम्। अनेकस्य प्रमेयस्य प्रतिभासाभ्युपगमात्। तथा हि 'न दण्डी' इति ज्ञाने दण्डत्वाद्यपि प्रमेयं प्रतिभासत इत्यभ्युपगमे कथं न सामानाधिकरण्यम्, तथा सूत्रव्याघातश्च "समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्तत्कार्यकारणभूते" (वै. सू. ८।१।९) कार्यकारणस्वभावे इति।

न पुनर्भूताभिधानमुपमायां मुख्ये बाधकानुपपत्तेः। नापि प्रमेयविशेषादेव प्रत्ययविशेषः, सहकारिवैलक्षण्येनापि भावात्।

नन्वेवं तर्हि विशेषणवत् सम्बन्धेऽपि ज्ञानं कल्पनीयम्। तत्र तदनुरागस्याप्रतिभासेन चक्षुरादिवद् अगृहीतस्यापि व्यापाराभ्युपगमात्।

नाप्यभेदोपचाराद् विशेषणविशेष्यभावः, 'पुरुषे दण्डः' इति ज्ञानानुपपत्तेः । अथ

विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सङ्कलय्यैव तथा प्रत्येति नान्यथा ॥ (?)

इति सङ्कलनाज्ञानमिति चेत्, नैतद् युक्तम् । एतावतो ज्ञानकलापस्य सद्भावे प्रमाणाभावात् । तथा हि परं विशेष्यज्ञानमुत्पद्यमानं दृष्टम् । तच्चान्यथा न घटत इति विशेषणेऽपि ज्ञानं लुप्तम् । न पुनर्ज्ञानान्तरसद्भावे प्रमाणमस्तीति ।

न चेदं निर्विषयं कल्पनाज्ञानम्, अर्थान्वयव्यतिरेकानुविधानात्, बाधकानुपपत्तेश्च ।

तदेवं गृहीतस्य विशेषणस्य विशेष्यज्ञानजनकत्वात् लिङ्गादिव्यापारानुपलब्धेश्च प्रत्यक्षत्वं कालस्येति । सत्यम् । तथैकज्ञानालम्बनत्वेऽपि युगपदादिप्रत्यया न कालस्य लिङ्गम्, तस्यापि विशेषणतयालम्बनत्वात् । अमीषाञ्चेन्द्रियानुविधानेन प्रत्यक्षफलत्वादित्यलम् ।

सर्वकार्याणामुत्पत्तौ कारणत्वं प्रतिज्ञातमाह * सर्वकार्याणाञ्चोत्पत्तिस्थितिविनाशहेतुः * इति । उत्पत्तिरात्मलाभो भावानाम् । स्थितिः क्रमभाव्यनेककार्यकर्तृत्वम् । विनाशः प्रध्वंसः । तेषां कारणमिति । अत्र तु यद्यपि सर्वकार्याणां हेतुरित्युक्ते सर्वमेतल्लभ्यते तथाप्यवान्तरविशेषापेक्षया भेदकथनम् ।

अथ तेषां हेतुः काल इति कथं ज्ञायत इत्याह * तद्व्यपदेशात् * इति । तथा ह्युत्पत्तौ कालेन व्यपदेशो 'मध्याह्ने उत्पन्नोऽपराह्णे उत्पन्नः' इति । स्थितौ च 'मध्याह्नं यावत् स्थितोऽपराह्णञ्च' इति । विनाशे तु 'प्रातर्विनष्टो वर्षान्ते विनष्टः' इत्यादि । कारणेन तु कार्यस्य व्यपदेशो यथा 'चाक्षुषं विज्ञानम्, मानसं विज्ञानम्' इति ।

अथाकारणेनापि व्यपदेशः सम्भवत्येव, 'मूर्त्ताः परमाणवः' 'दण्डी पुरुषः' इति । सत्यम् । तथापि सम्बन्धे सति व्यपदेशोपलब्धेः । न चान्यः सम्बन्धोऽत्र सम्भवतीति कार्यकारणभावो ज्ञायते । अथास्ति संयोगः ? न । गुणकर्मादेरव्यपदेश्यताप्रसङ्गात् । अस्ति च तत्रापि व्यपदेशः 'पूर्वाह्णे शब्दस्तथोत्क्षेपणम्' इत्यादि ।

अथायं व्यपदेशः संयुक्तसमवायाद् भविष्यतीति । न । अभावे तदभावप्रसङ्गात् । अतः कार्यकारणभाव एव सम्बन्धोऽभ्युपेयः, तस्य हि व्यापकत्वादिति । तथा नियतकाले कुसुमादेः कार्यस्योपलम्भो न कालान्तरे इत्यन्वयव्यतिरेकाभ्यां तस्य कारणत्वं विज्ञायते । तथा हि वसन्तसमय एव पाटलादिकुसुमानामुद्गमो न कालान्तरे इत्येवं कार्यान्तरेष्वनूह्यम् । तथा 'प्रसवकालमपेक्षते' इति व्यवहारात् कारणत्वं कालस्य । तथाहि, सहकारिणमपेक्ष्योपलब्धेः । कालस्य सहकारितामन्तरेण 'प्रसूतौ' अयं व्यवहारो न स्यात् ।

तथा न परं युगपदादिप्रत्ययहेतुः * क्षणलवनिमेषकाष्ठाकलामुहूर्त्तयामाहोरात्रार्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः * इति । तथाहि, परमाणोश्चावरुद्धनभोदेशत्यागोपलक्षितः कालः क्षणः ।

"तद् द्वयं लव इत्युक्तो निमेषश्च लवद्वयम् ।
काष्ठा निमेषाः पञ्चदश चेह प्रकीर्तिताः ॥
त्रिंशत् काष्ठाः कला प्रोक्ता कलाः त्रिंशन्मुहूर्त्तकः ।" (पुराणम्)

इत्येवं मासादेरपि लक्षणं प्रसिद्धं ग्राह्यम् ।

स चायं क्षणादिव्यवहारो विशिष्टत्वाद् विशिष्टं निमित्तमाक्षिपति । न चान्यन्निमित्तं सम्भवतीति, क्रियादेः प्रतिषेधाद् इति कालसद्भावसिद्धिः । तस्य समवायित्वगुणवत्त्वप्रतिपादनार्थं * तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः * इति वाक्यम् । अत्र केषाञ्चिदुत्पत्तौ समवायिकारणम्, एतैर्गुणैर्गुणवान् काल इति ।

अथ द्रव्यत्वादेव संख्यासद्भावसिद्धौ किमेकोऽनेको वेति संशयस्तन्निरासायाह * काललिङ्गाविशेषादेकत्वं सिद्धम् * इति । कालस्य यल्लिङ्गं युगपदादिप्रत्ययरूपं तदविशिष्टमिति नानात्वाप्रतिपादकम् । ननु चासिद्धमेतत्, युगपदादिप्रत्ययानां परस्परं विशिष्टत्वात् । न च कार्यवैलक्षण्यं कारणवैलक्षण्यं विना भवतीति, नानात्वमेव न्याय्यम् । सत्यम् । कार्यवैलक्षण्याद् विज्ञायत एव सामग्रीवैलक्षण्यम् । तच्च सहकार्यन्तरानुप्रवेशेनापि घटत इति कथं कालस्य नानात्वम् । उक्तश्चात्र विशिष्टक्रियोपचितस्य विशिष्टप्रत्ययजनकत्वमिति । न चैवं परमाणूनां चातुर्विध्यं व्याहन्यत इति पूर्ववद् वाच्यम् । तदेवं नानात्वे प्रमाणाभावाद् द्रव्यस्य च संख्येयत्वादित्येकत्वं सिद्धम् ।

तथा * तदनुविधानात् पृथक्त्वम् * इति। तेनैकत्वेनानुविधानं साहचर्यात्, यत्र ह्येकत्वं तत्रावश्यमेकपृथक्त्वं भविष्यतीति। न चैवं परिमाणविशेषेण साहचर्यमस्तीति ज्ञानार्थं क्रमातिक्रमेण पृथक्त्वनिरूपणमिति।

तथा * कारणे काल इति वचनात् परममहत् परिमाणम् * इति। "युगपदादिप्रत्ययानां कारणे कालाख्या" इति (वै. सू. ७।१।२५) सूत्रं दर्शयति। तथाहि, युगपदादिप्रत्ययानां कारणे काल इत्याख्या संज्ञेति। ते च प्रत्ययाः सर्वत्र भवन्तीति व्यापकत्वं कालस्य। तस्माच्च परममहत्त्वमिति। यद् वा अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात् परममहत्त्वमिति पूर्ववद् वाच्यम्।

तथा * कारणपरत्वादिवचनात् संयोगः * इति। "कारणपरत्वात् कारणापरत्वाच्च कार्ये परत्वापरत्वे" (वै. सू. ७।२।२२) इति सूत्रं दर्शयति। कारणपरत्वं हि कालपिण्डसंयोगः परत्वोत्पादकत्वादुपचारेण विवक्षित इति वक्ष्यामः परत्वपरीक्षायाम्।

* तद्विनाशकत्वाद् विभागः * इति। तस्य हि संयोगस्य कृतकत्वादवश्यं विनाशेन भवितव्यम्। स च सर्वत्राश्रयविनाशाभावाद् विभागादेव विनश्यतीति विभागः सिद्ध इति।

अथ कालस्य कथं द्रव्यत्वं नित्यत्वञ्चेत्याह * तस्याकाशवद् द्रव्यत्वनित्यत्वे सिद्धे * इति। तथा हि गुणवत्त्वादनाश्रितत्वाच्च द्रव्यं कालः। समानासमानजातीयकारणासम्भवाच्चाकार्यत्वेन नित्य इत्यतिदेशार्थः।

ननु चात्र कालस्यैकतायां वर्तमानादिव्यवहारः कथं स्यादित्याह * काललिङ्गाविशेषादञ्जसैकत्वेऽपि * इत्यादि। यद्यपि काललिङ्गाविशेषादञ्जसा मुख्यया वृत्त्यैकत्वं सिद्धं तथापि सर्वकार्याणां प्रारम्भश्च क्रियाभिनिर्वृत्तिश्च स्थितिश्च निरोधश्चेति तथोक्तास्त एवोपाधयः, तद्भेदान्नानात्वमिति। तथा च प्रारम्भः क्रियोपलक्षितोऽनागतः कालः। अभिनिर्वृत्तिरात्मलाभस्तदुपलक्षितश्च वर्तमानः। तथा स्थितिः क्रमभाव्यनेककार्यकर्त्तृत्वं तदुपलक्षितोऽपि वर्तमान एव। तस्य यावद् वस्तुसद्भावव्याप्यत्वाद् यावद् विवर्तते वस्तु तावद् वर्तमान इति। तथा निरोधो विनाशस्तदुपलक्षितश्चातीत इति

अथ कथं नानात्वमुपचर्यत इत्याह * मणिवत् पाचकवद् वा * इति । यथा मणेः स्वरूपापरित्यागेनैवोपाधिभेदादुपचर्यते नानात्वं 'पीतो रक्तः' इति, तद्वदिहापि भिन्नक्रियोपाधिवशाद् वर्तमानादिभेद इति । यथा वा स्वरूपापरित्यागेनैव पुरुषस्य नानाक्रियावशात् पाचकादिभेदस्तद्वदिहापीति । वास्तवे हि भेदे बाधकोपपत्तेः । तथा हि यदि वर्तमानादेर्वास्तवो भेदो व्यापकत्वञ्च स्याद् एकस्य वस्तुनोऽनेककालसम्बन्धाद् अव्यपदेश्यता प्रसज्येत । न हि वर्तमानेन व्यपदेशोऽतीतानागताभ्यामपि सम्बन्धात् । नाप्यतीतेनेतराभ्यामपि सम्बन्धाद् अव्यापकत्वम् । तर्हि नानेकस्य पुरुषस्यैकस्मिन्नेव देशेऽतीतानागतवर्तमानप्रत्ययाः प्राप्नुवन्ति । ते तथा दृष्टाः । तथा चैकस्य विद्यमानक्रियोपलम्भादेकस्मिन्नेव देशे वर्तमानप्रत्ययः । तत्रैवान्यस्य क्रियोपरमादतीतप्रत्ययः । अन्यस्य चोत्पद्यमानक्रियोपलम्भादनागत इति । क्रियावशादेव नानाप्रत्ययजनकत्वं न पुनर्वास्तवोऽस्य भेद इति स्थितम् ।

**दिक् पूर्वापरादिप्रत्ययलिङ्गा । मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वेतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति सा दिगिति ।**

**तस्यास्तु गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः । कालवदेते सिद्धाः ।**

**दिग्लिङ्गाविशेषादञ्जसैकत्वेऽपि दिशः, परमर्षिभिः श्रुतिस्मृतिलोकव्यवहारार्थं मेरुं प्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगविशेषास्तेषां लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः ।**

**ततो भक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात् पुनर्दश संज्ञा भवन्ति । माहेन्द्री, वैश्वानरी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौवेरी, ऐशानी, ब्राह्मी, नागी चेति ।**

इदानीं दिशोऽवसरप्राप्ताया लक्षणपरीक्षार्थं * दिक् पूर्वापरादिप्रत्ययलिङ्गा * इत्यादि प्रकरणम् । दिगिति लक्ष्यनिर्देशः । पूर्वापरादिप्रत्ययलिङ्गेति लक्षणम् । तथा पूर्वश्चापरश्च पूर्वापरौ, तावादिर्येषामिति तथोक्तास्ते च ते प्रत्ययाश्चेति, ते लिङ्गं यस्याः सा तथेति ।

सङ्ग्रहोक्तेर्विवरणार्थमाह * मूर्तमवधिं कृत्वा मूर्तेष्वेव द्रव्येषु विषयभूतेष्वे-तस्मान्मूर्तद्रव्यादिदं मूर्तं पूर्वेण दक्षिणेनेत्यादिदश प्रत्यया यतो निमित्ताद् भवन्ति सा दिगिति * । तथा च दिगितरेभ्यो भिद्यते, पूर्वापरादिप्रत्ययलिङ्गत्वात्, यस्तु न भिद्यते न चासावेवम्, यथा क्षित्यादिरिति । व्यवहारो वा साध्यः ।

ननु च पूर्वापरादिप्रत्ययाः परस्परापेक्षितया मूर्तेष्वेव भवन्तीत्यसिद्धं लक्षणा-भिधानम् । नैतदेवम् । परस्परापेक्षितायामुभयाभावप्रसङ्गात् । तथाहि, यदि पूर्वमपेक्ष्य अपरप्रत्ययः, अपरञ्चापेक्ष्य पूर्वप्रत्यय इत्येकाभावेऽन्यतराभावादुभयाभावप्रसङ्गः । न च निर्निमित्तः, कदाचिदुत्पन्नत्वादन्वयव्यतिरेकाभ्यां मूर्तद्रव्यस्य व्यापारोपलब्धेः, अङ्गुल्यादिव्यपदेशाच्चालम्बनत्वम् । न च तस्याविशिष्टस्य प्रत्ययजन्मनि व्यापारः, सर्वत्राविशेषेण पूर्वादिप्रत्ययाविशेषप्रसङ्गात् ।

अथ मूर्तद्रव्यमेवावधिभूतं निमित्तमिति चेत्, न । तस्य सर्वप्रत्ययेष्वविशेषात् । तथा हि तस्य निमित्ततायां यत्रैव पूर्वप्रत्ययस्तत्रैव दक्षिणादिप्रत्ययाः प्रसज्येरन्, अविशेषात् । नापि सङ्केत एव निमित्तम् । तस्य हि निमित्तं विना सर्वत्राप्रवृत्तेः । तथा ह्येकं निमित्तं विनैकत्र सङ्केतितः 'पूर्व' शब्दो नार्थान्तरे प्रवर्तते । अथास्ति पूर्वादि-शब्दानां सङ्केतप्रवृत्तेः कारणमेकं यत्सद्भावादर्थान्तरेऽपि प्रवृत्तिरिति चेत् । सा तर्हि दिगिति । अथाविशिष्टतया दिशो न विशिष्टप्रत्ययजनकत्वमिति चेत्, न । एकत्वेऽपि विशिष्टसंयोगवशाद् विशिष्टप्रत्ययजनकत्वमित्यनन्तरं वक्ष्यामः ।

अथ विकल्पज्ञानत्वान्निर्विषयाः पूर्वादिप्रत्यया वासनावशाद् भवन्तीति चेत्, तन्न । अबाध्यमानत्वात् । अबाध्यमानं ज्ञानं निर्विषयं न भवत्येव । शुक्लादिविज्ञानवद् विषयस्य चाङ्गुल्यादिव्यपदिश्यमानस्यान्वयव्यतिरेकाभ्यां व्यापारोपलब्धेरित्युक्तम् । न च वासनैवात्र निमित्तम्, तस्या बोधव्यतिरेकेणासम्भवादिति पूर्वन्यायात् । अतो

विशिष्टप्रत्ययाः पूर्वापरादयो न विशिष्टं निमित्तमन्तरेण भवन्ति । न चान्यन्निमित्तं क्षित्यादिरूपं सम्भवतीत्यतो निमित्तान्तरासम्भवाद् यदत्र निमित्तं सा दिगिति विशेषण-विशेष्यं न्यायः । सर्वोत्पत्तौ कारणत्वं कालवद् द्रष्टव्यम् ।

समवायित्वगुणवत्त्वप्रतिपादनार्थमाह * तस्यास्तु गुणाः संख्यापरिमाण-पृथक्त्वसंयोगविभागाः * इति । तत्र चातिदेशं करोति * कालवदेते सिद्धाः * इति । तथा दिग्लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैकत्वं दिशः सिद्धम् ।

ननु पूर्वापरादिप्रत्ययाः परस्परं विलक्षणस्यैव निमित्तस्य प्रतिपादका इति नानात्वमेव युक्तम् । न । सहकारिवैलक्षण्येनापि प्रत्ययवैलक्षण्योपपत्तिरित्युक्तन्यायात् । अतो द्रव्यत्वादेव संख्यायोगसिद्धौ नानात्वे प्रमाणाभावाद् एकत्वं सिद्धम् ।

तेनैकत्वेनानुविधानात् साहचर्यादेकपृथक्त्वञ्चेति । 'पूर्वापरादिप्रत्ययानां कारणे दिगाख्या' इति वाक्येन परममहत्त्वम् । तथा च पूर्वापरादिप्रत्ययाः सर्वत्र निमित्तं विना न सम्भवन्तीति दिशो व्यापकत्वात् परममहत्त्वम् । तथा "कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे" (वै. सू. ७।२।२२) इति सूत्रेण संयोगः सिद्धः । तथा हि कारणपरत्वं परत्वोत्पादको दिक्पिण्डसंयोगः । अपरत्वञ्चापरत्वोत्पादको विवक्षित इति वक्ष्यामः परत्वपरीक्षायाम् । संयोगश्च कृतकत्वादवश्यं विनाशीत्याश्रयविनाशस्य सर्वत्रासम्भवाद् विभागादपि नश्यतीति विभागः सिद्ध इत्यतिदेशार्थः । तथा गुणवत्त्वाद-नाश्रितत्वाच्च द्रव्यम् । समानासमानजातीयकारणासम्भवाच्चाकार्यत्वेन नित्यत्वञ्चेति द्रष्टव्यम् ।

अथैकस्या दिशः प्राच्यादिव्यवहारः कथं स्यादित्याह * दिग्लिङ्गाविशेषादञ्ज-सैकत्वेऽपि * इत्यादि । तत्र हि यद्यपि दिशो लिङ्गानामविशेषान्नानात्वाप्रसिद्धौ अञ्जसा मुख्यया वृत्त्यैकत्वं सिद्धम् । तथापि सवितुर्ये संयोगा लोकपालपरिगृहीत-दिक्प्रदेशैः सहेति विभक्ति [ वि ] परिणामः । यद् वा भगवतः सवितुर्ये संयोगास्ते केषामिति विवक्षायां सम्बन्धस्यापि विद्यमानत्वाद् युक्तैव षष्ठी ।

* लोकपालपरिगृहीतदिक्प्रदेशानाम् * इति । अन्वर्था अनुगतार्थाः * प्राच्यादि-भेदेन दशविधाः * दशप्रकाराः । * संज्ञाः कृताः * परमर्षिभिरिति । किमर्थमित्याह

[ * श्रुतिस्मृतिलोकव्यवहारार्थम् * । ] श्रुतिश्च, स्मृतिश्च, लोकश्चेति तथोक्तास्तेषां संव्यवहारार्थमिति । श्रौतो हि व्यवहारः 'वायव्यां गवयमालभेत', स्मार्तस्तु 'प्राङ्मुखो भुञ्जीत', लौकिकोऽपि 'अस्मद्वृद्धाः प्राङ्मुखा यजन्ते स्म' इत्यादिव्यवहारस्य प्रसिद्ध्यर्थमिति ।

अथ लोकपालपरिगृहीतदिक्प्रदेशैः संयोगो भगवतः कथं भवतीत्याह * मेरुं प्रदक्षिणमावर्तमानस्य * इति । प्रदक्षिणं हि यथा भवति तथा मेरुं परिभ्रमतोऽपि विशिष्टसंयोगास्तद्वशाच्च प्राच्यादिव्यवहारः, अन्वयव्यतिरेकाभ्यामुपलम्भाच्च । तथाहि, उदयसमये सवितुर्दिक्प्रदेशेन योगात् प्राचीति व्यवहारः, तत्र हि प्राक् प्रथममञ्चतीति कृत्वा । एवं मध्याह्नसमये दिक्प्रदेशेन संयोगाद् दक्षिणेति व्यवहारः । तथा चापराह्णे तद्योगात् प्रतीचीति च । एवमुदीच्यादिष्वपि वाच्यम् ।

नन्वेवं तर्हि स एवादित्यसंयोगोऽस्तु पूर्वादिव्यवहारस्य निमित्तम्, अलं दिशः कल्पनयेति । न । आदित्यस्यापि पूर्वापरादिव्यवहारविषयत्वेऽन्यादित्यपरिकल्पनायामनवस्था स्यादिति निमित्तान्तरमेव न्याय्यम् । न चादित्यपरिवर्तनं सर्वत्र सम्भवतीति तत्र पूर्वापरादिव्यवहाराभावप्रसङ्गः । तस्मादेकाप्यनेकसंयोगोपचिता विशिष्टव्यवहारसमर्थेत्यभ्युपगन्तव्यम् ।

अतो भक्त्या उपचारेण दश दिशः सिद्धाः । तासाञ्चोपचरितदिशां देवतापरिग्रहवशात् पुनर्दश संज्ञा भवन्ति । महेन्द्रेण परिगृहीता माहेन्द्री, वैश्वानरेण परिगृहीता वैश्वानरीत्येवमन्यास्वपीति ।

**आत्मत्वाभिसम्बन्धादात्मा । तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते । वास्यादीनामिव करणानां कर्तृप्रयोज्यत्वदर्शनात्, शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते ।**

**न शरीरेन्द्रियमनसां चैतन्यम् अज्ञत्वात् । न शरीरस्य चैतन्यम्, घटादिवद् भूतत्वात् कार्यत्वाच्च; मृते चासम्भवात् । नेन्द्रियाणाम्,**

करणत्वाद्, [उपहतेषु] विषयासान्निध्ये चानुस्मृतिदर्शनात्। नापि मनसः, करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात्, स्वयं करणभावाच्च। परिशेषादात्मकार्यत्वात् तेनात्मा समधिगम्यते। शरीरसमवायिनीभ्याश्च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठातानुमीयते, प्राणादिभिश्चेति।

कथम्? शरीरपरिगृहीते वायौ विकृतकर्मदर्शनाद्, भस्त्राध्मापयितेव। निमेषोन्मेषकर्मणा नियतेन दारुयन्त्रप्रयोक्तेव। देहस्य वृद्धिक्षतभग्नसंरोहणादिनिमित्ताद्, गृहपतिरिव। अभिमतविषयग्राहककरणसम्बन्धनिमित्तेन मनःकर्मणा, गृहकोणेषु पेलकप्रेरक इव दारकः। नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनाद् अनेकगवाक्षान्तर्गतप्रेक्षकवद् उभयदर्शी कश्चिदेको विज्ञायते।

सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते। ते च न शरीरेन्द्रियगुणाः। कस्मात्? अहङ्कारेणैकवाक्यत्वाभावात्, प्रदेशवृत्तित्वादयावद्द्रव्यभावित्वाद् बाह्येन्द्रियाप्रत्यक्षत्वाच्च। तथाहंशब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति।

तस्य गुणा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः आत्मलिङ्गाधिकारे बुद्ध्यादयः प्रयत्नान्ताः सिद्धाः। धर्माधर्मावात्मान्तरगुणानामकारणत्ववचनात्। संस्कारः स्मृत्युत्पत्तौ कारणवचनात्। व्यवस्थावचनात् संख्या। पृथक्त्वमप्यत एव। तथा चात्मेतिवचनात् परममहत् परिमाणम्। सुखादीनां सन्निकर्षजत्वात् संयोगः। तद्विनाशकत्वाद् विभाग इति।

इदानीमात्मनो लक्षणपरीक्षार्थम् * आत्मत्वाभिसम्बन्धाद् * इत्यादिप्रकरणम्। आत्मत्वेनाभिसम्बन्धः, आत्मोपलक्षितः समवायो वा लक्षणमिति। तथा ह्यात्मा,

